साधकबाधकप्रमाणोपन्यासरूपयुक्तिभिरनुचिन्तनम् । शमो ऽन्तरिन्द्रियनिग्रहः । दमो बहिरिन्द्रियनिग्रहः । सम्पन्नस्येति ।

उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणो गतिः ।
तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः ॥

इति वचनेन कर्मसहितस्यैव तत्त्वज्ञानस्य मोक्षहेतुत्वात् । ननु वाक्यजन्यज्ञानस्य कथं संसर्गानवगाहित्वमिति चेत् । सत्यम् । तात्पर्यविषयत्वमेव वाक्यजन्यज्ञाने तन्त्रम् । अस्ति चात्रापि विशुद्धे ब्रह्मणि वेदान्तानां तात्पर्यमिदमेवाखण्डार्थत्वम् । ननु ब्रह्मणो महावाक्यार्थज्ञानाविषयत्वे "अदृष्टो द्रष्टा अश्रुतः श्रोता" इतिश्रुतिविरोध इति चेन्न । अविद्यया आवृतस्यैव स्वरूपस्य आवरणनिरासाय महावाक्यजन्यज्ञानविषयत्वात् । निरूपाधिकस्य तु आवरणाभावान्नास्ति श्रुतिजन्यज्ञानेन सम्बन्धः । ननु व्यवहारमार्गे वेदान्तिभिरपि पदार्थकल्पनाऽवश्यमङ्गीकार्या । अन्यथा वाक्यार्थस्यापूर्वत्वेन वाक्यार्थे वाक्यसङ्केतग्रहाभावाद् बोध एव न स्यात् । तस्मादखण्डयोर्वाच्यवाचकभावो न सम्भवतीत्यस्वरसादाह । यद्वेति अखण्डार्थत्वं-संसर्गानवगाहि यथार्थज्ञानजनकत्वम् । तत्त्वमसीत्यादिवाक्यमेव ब्रह्मप्रत्यक्षं जनयतीत्यद्वैतसिद्धान्तविरोधमाशङ्क्याह—यद्वेति । उपलक्षणीभूतधर्माणां चासत्वान्नाद्वैतसिद्धान्तहानिः ।

अर्थभेदाच्छब्दभेद इति । नन्वेवं वेदे पठितस्य शब्दस्य विनियोगकाले ऽर्थान्तरे प्रयोगाच्छब्दभेदापत्तिरिति चेदत्रोक्तं हरिणा—

मन्त्रास्त्वविनियोगेन लभन्ते भेदमूहवत् ।
तान्याम्नायान्तराण्येव, पठ्यते कश्चिदेव तु ॥ १ ॥

इति मन्त्राणां सर्वेषां वेदत्वमेव । वेदे तु कश्चिदेव मन्त्रः पठ्यत इति तदर्थः । नन्वस्मिन्पक्षे "एकः शब्दो नानार्थः अक्षाः पादा माषा इति भाष्यं कथमुपपद्यतामत आह—समानाकारत्वेति । वस्तुतो ऽर्थभेदाच्छब्दभेद इत्ययुक्तम् । 'कुटीभार्य' इत्यत्र समानायामाकृतौ भाषितपुंस्कत्वाभावान्न पुंवदिति भाष्यासङ्गतेः, सामर्थ्यादिना ऐक्योपपादने बीजाभावात् इति चेत्सत्यम् । 'विषयेण तु नानालिङ्गकरणात्' इत्यादिना भाष्यकृतैव शब्दैक्यं दर्शितम् । 'आन्यभाव्यं तु कालशब्दव्यवायात, इत्यादिना च शब्दभेदो दर्शितः । तस्य—तादात्म्यस्य । ततश्च शब्दभेदः तादात्म्यभेदश्चेति प्रथमः पक्षः । शक्ति-

निरूपकः अर्थः, शक्त्याश्रयः शब्दः तदुभयभेदाद्भेद इत्यर्थः। यतूक्तं कुसुमाञ्जलौ।

'शक्तिभेदो न चाभिन्नः स्वभावो दुरतिक्रम" इति।

अस्यार्थः-शक्तिभेदो न, चो हेतौ अभिन्नो यतः शक्तिशक्तिमतोऽभेदात्। ननु स्वभावादेवैकस्य नानाकार्यकारित्वं तत्रोक्तं-स्वभावो दुरतिक्रम इति। कार्यजननस्वभावस्यानुवर्तमानत्वादेककारणेन कार्यान्तरस्याप्यापत्तिरिति तन्मते एकस्य दण्डस्य घटहिंसाद्यनेककार्यजनकत्वं न स्यात्। किञ्च सो ऽयमित्यत्र प्रत्यभिज्ञायां यदि सादृश्यमेव बीजं स्यात् तदा सो ऽयं ककार इत्यत्रापि तथात्वापत्तौ ककारादीनामप्यैक्योपपत्तिरिति॥

( कलाटीका )

तद्ग्रहश्चेति। तादात्म्यग्रहश्चेत्यर्थः। तथा च तस्यैव बोधो नास्माकमिति न शङ्कोक्तदोषस्तदाह-न दोष इति। उक्तापिसूचितं सर्वसाधारणं पक्षान्तरमाह—यद्वेति। विशिष्टे शक्त्यग्रहेण ततो ऽपि लाघवादाह—यद्वेति। अनयोरपि पक्षयोर्बोधस्तस्यैवेति भावः। एतेन तस्य भावस्तत्त्वमित्यपास्तम्। तदाह-इत्यादीति। बोधकत्वस्य शक्तित्वेऽर्थभेदाच्छब्दभेद इति पक्षोक्तिसम्भवाभावः। एकस्यैव शक्तिलक्षणाभ्यां भिन्नार्थबोधकत्वस्य दृष्टत्वेनैकत्रभिन्नार्थबोधजनकत्वे विरोधाभावात्। इच्छायाः शक्तित्वेऽपि एकस्मिन्नेकविषयलाभेच्छानां दर्शनेनाविरोधस्यैव सत्वात् तदेतद्ध्वनयन् आह-तादात्म्यमूलकस्येति वाच्यवाचकभावस्य। न तु परोक्तस्येतिभावः। नन्वेवमेकस्य नानार्थत्वधीः कथमत आह। समेति। तस्य। तादात्म्यस्य। क्वचित्तथैव पाठः॥

अन्ये त्वेकत्रैवाम्रफले रूपरसगन्धादीनां भिन्नानां तादात्म्यवद् एकत्रैव शब्देऽनेकार्थनिरूपितानि भिन्नानि तादात्म्यानीत्याहुः। परेतु निरूपकभेदेऽपि तादात्म्यमेकमेवेति शक्त्यैक्यमेवेत्याहुः। "हलोनन्तराः" (अष्टा० सू० १-१-७) इति सूत्रे सरूपसूत्रे च भाष्ये सूचितमिदं पक्षत्रयम्। सर्वजातीयैः सङ्केतैरस्य सम्ब-

न्धत्वेनैव ज्ञानं, तदेव च बोधसाधनमिति बोध्यम्। न च तयोस्तादात्म्यस्वीकारे समव्याप्ततया शब्दादनुमानमेव स्यादर्थस्येति प्रमाणान्तरत्वभङ्गः। पक्षधर्मताज्ञानाद्यनपेक्षतया तस्य प्रमाणान्तरत्वात्। सिद्धिसत्त्वे इच्छां विनापि बोधदर्शनाच्च।

कुञ्जिकाटीका।

भिन्नानि तादात्म्यानीति। अर्थभेदेऽपि न शब्दभेदः। अनन्तव्यक्तिकल्पनापत्तेस्तस्मादेकवृन्तगतानेकफलवदेकस्मिन् शब्दे नानार्थसम्बन्ध इति भावः। अस्मिन्पक्षे "तत् यः सारण्यके ससीमके ग्रामशब्दो वर्तते तमभिप्रेत्योच्यते अनन्तराविमौ ग्रामौ" इति भाष्यं व्यक्तिभेदमारोप्य। अत्र शब्दैक्यमते पक्षद्वयं, शक्यतावच्छेदकभेदेऽपि शक्तिरेकैव, शक्यतावच्छेदकभेदाच्छक्तिरपि भिन्नैवेति। शक्यतावच्छेदकं च शक्यतावच्छेदकतापर्याप्त्यधिकरणं नातः सूर्याचन्द्रमसोर्भेदात्पुष्पवन्तपदे नानार्थता। आद्यपक्षे यथा वायौ रूपसमवायसत्त्वेऽपि रूपनिरूपितत्वविशिष्टसमवायो नास्तीति रूपवत्ता बुद्धिर्न भवति। एवं तदर्थनिरूपितत्वविशिष्टशक्तिस्मरणाभावान्नैकार्थबोधकाले ऽपरार्थबोधः। शक्तिभेदाच्च नानार्थत्वव्यवहारः सर्वार्थनिरूपितवृत्तीनां वर्तत इत्येकशब्दोपात्तत्वादेकत्वं न्याय्यमित्याहुः। किञ्च शक्तिभेदे गौरवमित्यपि बोध्यम्। ननु संकेतस्याननुगतत्वात् सम्बन्धत्वासम्भवइत्यत आह—सर्वजातीयैरिति। ईश्वरकृतानामस्मदादिकृतानां च सङ्केतानां व्याख्यातृभेदेन नानाविधसङ्केतानां च सङ्केतत्वेनैव सम्बन्धतेत्यर्थः।

समव्याप्ततयेति। सहचरिततयेत्यर्थः। आनयपदं घटसम्बद्धानयनपदार्थबोधकं घटपदसम्बद्धत्वादित्येवं व्याप्येन शब्देन व्यापकस्यार्थस्यानुमानादिति भावः। अत एवोक्तं गौतमेन "पूरणप्रदाहपाटनानुपपत्तेश्च सम्बन्धभाव" (गौ०सू०५३।अ०२।पा०१) इति। अग्निशब्दोच्चारणे मुखदाहापत्तेर्न शब्दार्थयोर्व्याप्यव्यापकभाव इति तदर्थः। तार्किकमते तु शब्दस्याकाशनिष्ठतया व्यधिकरणत्वान्न तेनानुमानमितिभावः। पक्षेति। पक्षः सन्दिग्धसाध्यवान्। पक्षधर्म-

ताज्ञानं, हेतोः पक्षवृत्तित्वज्ञानम् । अर्थव्याप्यशब्दवादिश्मिति परा॰मर्शं विनापि शाब्दबोधान्न तस्यानुमितित्वमिति भावः ।

नन्वियमनुमितिर्व्याप्तिज्ञानाद्यनपेक्षा विलक्षणैव । अन्यथा भि॰न्नविषयकप्रत्यक्षं प्रति शाब्दसामग्र्या अनुमितिसामग्र्याश्च प्रति॰बन्धकताद्वयकल्पने गौरवमत आह–सिद्धिसत्त्वे इति । पर्वते वह्निं नि॰श्चयोत्तरं पर्वते वह्न्यनुमितिर्जायतामितीच्छयैवानुमितिर्भवति । शाब्दबोधस्तु निश्चयसत्त्वे ऽपीच्छां विनैव भवतीति वैषम्यमिति भावः । यद्यपि शब्दार्थयोस्तादात्म्याभावे ऽपि घटमानयेत्यादिपदान्यर्थवि॰षयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बत्वात्, इत्यनुमाने वैयधिकरण्याभावादनुमितिः सम्भवति, तथापि श॰ब्दार्थयोस्तादात्म्ये व्याप्य व्यापकभावस्य झटित्युपस्थितिरित्यतः तत्पक्षे निराकरणमिदम् ॥

( कलाटीका )

आश्रयाभेदेऽपि निरूपकभेदाद्भेद तादात्म्यभेद इत्यर्थभेदे ऽपि शब्दैक्यमिति पक्षमाह । अन्ये त्विति । आदिना स्पर्शसंख्यादयः । तादात्म्यवत् । तादात्म्यानीवेत्यर्थः । अन्यथैकतादात्म्यमादाय सर्ववत्ताबुद्धिप्रसङ्गः, तथाच शक्तिनानात्वमेवेति भावः । पक्षद्वयादपि लाघवादाह–परेत्विति । अपिः आश्रयभेदसमुच्चायकः । एकमेवेति । स्वतो भेदस्तु न, गौरवात् । तत्तन्निरूपितत्वविशिष्टतादात्म्यस॰म्बन्धेन तद्वत्ताविरहान्नोक्तापत्तिरितिभावः । अत्र मानमाह—हलो ऽनन्तेति । तत्र हि "सर्वत्रातज्जातीयकं व्यवधायकं भवति कथमन॰न्तराविमौ ग्रामाविति ग्रामशब्दो ऽयं बह्वर्थ, अस्त्येव शालासमुदा॰ये वर्तते" इत्याद्युक्त्वा 'तत् यः सारण्यक' इत्याद्युक्तम् । केचिदर्थ॰भेदेन शब्दभेदमिच्छन्ति । प्रत्यभिज्ञानं तु सामान्यनिवन्धनम् । अन्ये त्वेकशब्दत्वम्, तत्र चानेकशक्तियोगः, एकशक्तित्वं, वेति मतविकल्पः । तत्र यदा एकशब्दत्वपक्षस्तदा 'तद्यः सारण्यक' इति भाष्यं शक्तिभेदादुपचरितभेदाश्रयम् । भेदपक्षे तु 'ग्राम॰शब्दो ऽयं बह्वर्थ' इति भाष्यमभिन्नसामान्यनिमित्तैकत्वाध्यवसा॰याश्रयम्' इति कैयटेनोक्तम । ग्रामशब्दो ऽयमित्यस्य, तद्यःसारण्यकः इत्यस्य चाविरोधायाह–केचिदिति । 'अन्यायश्चानेकार्थत्वम्' इति त॰न्द्भावः । सामान्यं च ग्रामशब्दत्वादि ।

अन्ये त्विति। व्यक्तिभेदकल्पनायां गौरवमिति तद्भावः। तत्र चेति। निरूपकभेदाच्छक्तिभेद इति भावः। एकेति। समवायैकत्व नये रसो रूपवानित्यादिप्रयोगवदन्यार्थबोधकाले ऽन्यार्थबोधो वारणीयः। तदर्थसम्बन्धेन शक्तिग्रहाद् तत्तदर्थविशिष्टशक्तिभेदेन च नानार्थत्वव्यवहार इति भावः। तत्र पदेति। एकशक्तित्वपक्षे त्वर्थभेदादुपचरितभेदाश्रयमिति बोध्यम्। ग्रामशब्दोऽयं बह्वर्थ इति तु मुख्यार्थमेव। अत्र सर्वार्थनिरूपितवृत्तीनां वर्तत इत्येकशब्दबोध्यत्वेनाभेदबोधनादेकशक्तित्वपक्षो भाष्यबोधितः। तत्र वर्तनक्रियाऽस्तिक्रियायाः कर्त्री' इत्युद्द्योते उक्तम्। एवं सरूपसूत्रेऽपि बोध्यम्। प्रत्यर्थमित्यस्यार्थमर्थप्रतीति वदता भवताऽन्त्यं मतद्वयं सूचितम्। तदाह सरूपेति ननु तादात्म्यमूलकशक्तिज्ञाने त्वेतज्ज्ञानं न बोधजनकमत आह–सर्वेति। भेदघटितसङ्केतैरध्याससङ्केतैश्चेत्यर्थः। अस्य। तादात्म्यमूलकसम्बन्धस्य। एतेनोक्तव्याप्तिः। एवमग्रे ऽपि। तदेवेति। तत्त्वेन ज्ञानमेवेत्यर्थः। अनुपपत्तिग्रहस्य तदभावे एव सत्त्वमिति भावः।

वैशेषिकरीत्या शङ्कते। न चेति। तयोः–शब्दतदर्थयोः। अनुमानमेवेति अनुमितिरेवेत्यर्थः। इत्थं च तत्प्रयोगो 'घटमानयेत्यादिपदानि तात्पर्यविषयस्मारितपदार्थसंसर्गज्ञानपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वात् 'घटमानय' इत्यादिपदकदम्बव'दिति। तथाचानेन संसर्गज्ञानसिद्धौ ज्ञानावच्छेदकतया पदार्थसंसर्गसिद्धिः सम्भवतीति शब्दो न पृथक्प्रमाणमितिभावः। तदाह–प्रमाणान्तेति शब्दस्येति भावः। तत्रतावत् नैयायिकरीत्योत्तरयति। पक्षेति। आदिना व्याप्त्यादिप्रतिसन्धानपरिग्रहः। तथा च तदभावदशायामपि शाब्दबोधस्यानुभविकतया तदानीमनुमितिसामग्र्यभावेन तदसम्भवाच्छब्दस्य प्रमाणान्तरत्वमावश्यकम्। तदाह। तस्येति। शब्दस्येत्यर्थः। ननु शब्दस्य प्रमाणान्तरत्वे सर्वत्र शाब्दबोधजनकसामग्र्यन्तरकल्पने गौरवमिति सर्वत्र शाब्दबोधस्थले व्याप्त्यादिप्रतिसन्धानकल्पनमेव सम्यक्। तथा सति क्लृप्तसामग्र्यैवोपपत्तौ सामग्र्यन्तराकल्पनेन लाघवमत आह। सिद्धीति॥

**किञ्च पदमात्रात्पदार्थप्रत्ययस्य जायमानस्यानु-**

मितित्वासम्भवः। पदेभ्यः स्मृतिरेवेति तु न युक्तं, तत्तानुल्लेखात्, वाक्यादपि तदापत्तेश्च।

किञ्च 'शाब्दयामि' इत्यनुव्यवसायान्न स्मृतित्वमनुमितित्वं वा तज्जन्यप्रत्ययस्य।

किञ्च तथानुव्यवसायप्रयोजिकायाः शाब्दत्वजातेस्तदवच्छिन्ने आकाङ्क्षादिज्ञानहेतुत्वस्य च कल्पनावश्यकत्वे तद्वृत्त्यनुमितित्वस्य व्याप्तिस्मृत्यादेश्च कल्पने गौरवम्।

किञ्च सिद्धिसत्त्वेऽपि शाब्दबोधोदयेनानुमितेश्चानुदयेन सिद्धिप्रतिबध्यतावच्छेदककोटौ शाब्दातिरिक्तत्वविशेषणदाने गौरवम्। न च तत्प्रत्यक्षादिज्ञाननाशादेव तत्रानुमितिः अनुभवविरोधात्। सर्वत्र तथापत्तेश्चेति दिक्।

( कुञ्जिकाटीका )

ननु सिद्धिसत्त्वे ऽनुमितिरिव शाब्दबोधो ऽपि न भवति समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वेन तदनन्तरं शाब्दबोधस्यानुपयोगादत आह—किञ्चेति। ननु पदश्रवणानन्तरं पदार्थस्मरणे 'एते पदार्थाः, परस्परं संसर्गवन्तः, आकाङ्क्षादिमत्पदस्मारितत्वात्' इत्यनुमानमस्त्वित्यस्वरसादाह—पदमात्रादिति। व्याप्तिस्मरणादिकं विनापीति भावः। शाब्दबोधे पदार्थस्मरणं व्यापारः तथा च पदार्थानां स्मृतिरेव नातिरिक्तप्रमितित्वमिति तार्किकमतं निराकरोति। स्मृतिरेवेति। एकसम्बन्धिज्ञानस्यापरसम्बन्धिस्मारकत्वात्। ननु पदेभ्यो ऽर्थे स्मृते ततो ऽनुमितिः कल्प्यते इत्यत आह—न युक्तमिति। किञ्चैतन्मते पदार्थस्मरणमेव शाब्दबोधे हेतुः। तथा चावान्तरवाक्यार्थबोधकाले तस्य नष्टत्वात् ततो महावाक्यार्थबोधो न स्यात्। तस्मात्पदप्रयोज्या उपस्थितिरेव हेतुः। सा चावान्तरवाक्यार्थबोधरूपैवेत्यदोषः। तत्तानुल्लेखादिति। तत्ता पूर्वानुभूतता तां बुध्या विषयीकृत्यैव स्मरणोदयादिति भावः। वाक्यादपीति। तथा च वाक्यादपि स्म-

रणस्यैवापत्तौ अनुमितिशाब्दबोधयोरुच्छेद इत्यर्थः । न चापूर्व-वाक्यार्थस्थले पूर्वमनुभवाभावात्स्मरणासम्भवः इति वाच्यम् । खण्डशः प्रसिद्धानां पदार्थानां संसर्गाणां च स्मरणसम्भवात् ।

तथानुव्यवसायेति । तादृशानुव्यवसायात् शाब्दत्वजातिः क-ल्पनीयैव तदवच्छिन्नं प्रति आकाङ्क्षादिज्ञानस्य च हेतुत्वमवश्यं क-ल्पनीयमेवेति किमनुमितित्वादिकल्पनयेत्यर्थः । सिद्धिसत्त्वे ऽपीति । पर्वते वह्निज्ञानानन्तरमनुमितिर्न भवति, शाब्दबोधस्तु शब्दप्रयोगानु-पाती दुर्निवार इति भावः । ननु सिद्धिसत्त्वे ऽपि परार्थानुमितिवत् शाब्दबोधो ऽपि सम्भवतीति चेन्न । अनुमित्सायां सत्यामेवानुमि-तेरुदयात् । परार्थानुमितौ पर्वतो वह्निमान्, धूमात्, यो यो धूमवान् सो ऽग्निमानित्यादिकं पञ्चावयवात्मकं वाक्यं प्रयुज्यते, शाब्दबोधस्तु परप्रयुक्तात् वाक्यात्स्वस्य भवतीति भेदात् । प्रतिबध्यत्वेति । शाब्दातिरिक्तज्ञानं प्रति सिद्धिः प्रतिबन्धिकेति वक्तव्यं स्यादित्यर्थः।

नाशादेवेति । ज्ञानस्य क्षणिकत्वात् प्रत्यक्षनाशोत्तर क्षणेऽनुमि-तिरित्यर्थः । ननु एकक्षणविलम्बेऽनुभवविरोधः नास्तीत्यत आह—सर्वत्रेति । सिद्धिनाशानन्तरक्षणे एवानुमितेरापत्तेस्सिषाधयिषा-काले ऽप्यनुमितिर्न स्यादित्यर्थः। अत एव यत्र वह्निव्याप्य धूमवान्प-र्वतो वह्निमानिति प्रत्यक्षं ततः सिषाधयिषा तत्रानुमित्युत्पत्तये सि-षाधयिषाविरहविशिष्टसिद्ध्यभावकल्पनेति तार्किकाः । ऋष्यादिव्य-वहारात् शक्तिग्रह इति पूर्वमुपपादितम् । ऋष्यादिव्यवहारश्च सा-धुष्वेवेति साधूनामेव वाचकत्वम् ॥

( कलाटीका )

ननु सिद्धिप्रतिबध्यतावच्छेदककोटौ शब्दान्यत्वं निवेश्यते इति नायं दोषो ऽत आह—किञ्चेति । यत इतिशेषः । एवमग्रेऽपि । मात्रश-ब्दो ऽवधारणे । ( पक्षसाध्ययोरभावादिति भावः ) हेतोरुक्तस्या-सम्भवादिति भावः । ननु पदात्पदार्थोपस्थितिर्नानुमितिः, किन्तु स्मृतिः, इति नायं दोषो ऽत आह—पदेभ्य इति । एवो ऽनुमितिशाब्द-बुद्धिनिरासाय । तत्तेति । पूर्वानुभूततारूपतत्तेत्यर्थः सोऽयमित्यादा-विव स इत्येवमित्यर्थः । ननु तदभावे ऽपि फलानुरोधेन तदङ्गीकारो ऽत आह—वाक्यादपीति । अपिः पदसमुच्चायकः । तदापत्तेश्च स्म-रणापत्तेश्च । सम्बन्धिज्ञानतयैव पदज्ञानवत्तदुपयोग इति भावः ।

ननु फलबलात्पदार्थोपस्थितेः पूर्वं नियमतो वाक्यार्थांशोद्बोधकास-मवधानकल्पनमत एव 'दस्नसादो' 'हरे ऽवे' इत्यादौ च विशिष्टशक्त्यैव संसर्गांशे उद्बोधकासमवधानात्प्राक् पदार्थोपस्थितिमात्रं ततस्तदंशेऽप्युद्बोधकसमवधाने तद्विषयको वाक्यार्थबोधः । अत एवापूर्वो वाक्यार्थ इति प्रवादः सङ्गच्छते । अपूर्वत्वं च शाब्दबोधप्राक्क्षण-वर्तितज्जनकशब्दजन्यस्मृत्यविषयत्वम् इति न ततः स्मृतिरत आह—किञ्च शाब्देति । शाब्दयामीत्याकारकशब्दत्वावच्छिन्नावगाहिस-र्वसिद्धानुव्यवसायेन शाब्दत्वजातिसिद्धिरत एव तदवच्छिन्नकरणतया शब्दस्य प्रमाणत्वसिद्धिरिति भावः । तज्जेति । शब्दजेत्यर्थः । अत एव नानुमितं न साक्षात्कृतं किन्तु शब्दादेवावगतमित्यनुभवः सङ्गच्छते ।

ननु यथा पदार्थोपस्थितेः स्मृतित्वमते शब्दजन्यत्वमात्रेण परं तस्यामपीतरस्मृतिविलक्षणः शाब्दयामीति व्यवहारः न तु वाक्यज्ञान-पदार्थोपस्थितिकार्यतावच्छेदकीभूतजातिविशेषाक्रान्तता तस्याः । तथा वाक्यात्स्मृतावपि तद्व्यवहारोऽत आह । किञ्चेति । तथेति । शाब्दयामित्याकारकेत्यर्थः । तदवच्छिन्ने शाब्दत्वावच्छिन्ने तद्वृत्तीति । शाब्दवृत्तीत्यर्थः । आदिना ( परामर्शः ) पक्षधर्मताज्ञानादि-सङ्ग्रहः ।

ननु नेदं गौरवमुक्तयुक्तिभ्यामत आह । किञ्चेति । इदं गौरवं विघटयितुं शक्नते । न चेति । तत्प्रत्यक्षेति । अनुमितिविषयार्थे प्रत्यक्षेत्यर्थः । आदिनानुमित्यादीनां सङ्ग्रहः । नाशादेवेत्यनेन सिद्धिसत्त्वनिरासः । तदानीं तस्याः प्रतिबंधकत्वेन तदनुदयात् । ( नाशरूप-कारणाभावादेव तदापत्तेरभावात् ) । तत्र ( शाब्दबोधस्थले ) सिद्धि-स्थले । एवंच तत्सत्वे तदुदयो नैवेति न तत्र विशेषणदानमिति न गौरवमिति भावः ( अनुभवेति । सिद्धिसत्वे शाब्दबोधोदयस्यानुभूयमानत्वेन तत्र तत एव सा इति अस्याऽनुभवविरुद्धत्वात् (१)अनुभवति ) सिद्धिसत्त्वे इच्छासत्वेऽपि अनुमितेरनुभूयमानत्वेन तस्यैव तद्धेतुत्वमित्यस्यानुभवविरुद्धत्वात् ।

ननु विसंवाद्यनुभवो नेष्टसाधकोऽत आह—सर्वत्रेति । प्रसिद्ध-शाब्दबुद्धिभिन्नबहुधाद्यनुमिति विषयेऽपि तथा सुवचत्वेन सर्वत्रा-

(१) पाठान्तरम् क्वचित् पुस्तके ( ) चिन्हान्तर्गतम् ।

नुमितिसामान्ये तन्नाशोत्तरमेव जायमानत्वापत्तेश्चेत्यर्थः । तथा-चेच्छोत्तेजकत्वोच्छेदापत्तिः । अथ सिद्धिसत्त्वेऽपि इच्छायामनुमित्युदयानुभवात् तत्र तथा दुर्वचमिति ब्रूषे, तर्हि, अत्रापि सिद्धिसत्त्वे शाब्दबोधोदयानुभवेन तथादुर्वचमिति तुल्यमिति तत्प्रयुक्तगौरवं दुरुद्धरमेवेति भावः।(यावत्प्रतिबन्धकभावस्थले इत्यर्थः। तथापत्तेश्चेति। तत्तदभावस्यैव हेतुत्वापत्तेश्चेत्यर्थः ।तथा च प्रतिबध्यप्रतिबन्धकभावमात्रोच्छेदापत्तिरिति भावः(१)) किञ्चानुमितेरसम्भवात्। न च गौरस्तितावान्स्वधर्मिकान्वयबोधानुकूलाकाङ्क्षाद्याश्रयपदोपस्थापितत्वात् घटवदित्यनुमानं सुलभम् इति वाच्यम्, गवादेः पदोपस्थापितत्वाद्यभावग्रहदशायां गौरस्तीत्यादितो ऽन्वयबोधानापत्तेः । पदजन्या हि पदार्थोपस्थितिः स्वरूपसत्येवान्वयबुद्धावुपयुज्यते न तु ज्ञाता प्रमाणाभावात् । पदैरनुपस्थितस्यापि तदुपस्थितत्वग्रहादन्वयधीप्रसङ्गाच्च । न च 'गौः' पदमस्तित्ववद्गोज्ञानपूर्वकोच्चारणविषयः अस्तिपदसाकाङ्क्षपदत्वात् यन्नैवं तन्नैवं यथा आकाशमित्यनुमानमिति वाच्यम् । गवादिपदानां ज्ञानपूर्वकोच्चारितत्वाद्यभावनिश्चयदशायां जायमानसर्वजनीनानुभवसिद्धबोधस्यासङ्गत्यापत्तेः । गवादिनिष्ठमुख्यविशेष्यताशालिबोधस्यैवमप्यनुपपादनाच्च । अपि च शाब्दबोधोत्तरं नानुमिनोमीत्यनुव्यवसायान्न शाब्दत्वमनुमितित्वव्याप्यम्। न च तस्य व्याप्त्यादिज्ञानघटितसामग्रीजन्यानुमितित्वावच्छिन्नाभावविषयकत्वान्न दोष इति वाच्यम्। व्याप्त्यादिप्रतिसन्धानविरहदशायामपि तस्योत्पत्त्या तद्विषयकत्वासम्भवादिति दिक्। तदाह—दिगिति ॥

**सा च शक्तिः साधुष्विवापभ्रंशेष्वपि, शक्तिग्राहकशिरोमणेर्व्यवहारस्य तुल्यत्वात् । व्यवहारदर्शनेन च पूर्वजन्मानुभूतशक्तिस्मरणम् । अत एव बालानां तिरश्चां च बोधः । न हि तेषां तदैव तत्सम्भव इत्यन्ये । न च साधुस्मरणात्ततो बोधः ।**

**ते साधुष्वनुमानेन प्रत्ययोत्पत्तिहेतवः ।**

---

( १ ) इदं च पाठान्तरं पुस्तकान्तरे। (  ) चिह्नान्तर्गतम् ।

अम्बाम्बेति यदा बालः शिक्ष्यमाणः प्रभाषते ॥
अव्यक्तं तद्विदां तेन व्यक्ते भवति निश्चयः ।

इति हर्युक्तेः । अनुमानमत्र ज्ञानं, साधुविषयस्मरणेनेत्यर्थः । तद्विदां साधुविदाम् । असाधोः साधुप्रकृतिकत्वात्सादृश्येन तज्ज्ञानमिति वाच्यं, साधुस्मरणं विनापि बोधानुभवात् । तद्वाचकसाधुशद्बमजानतां बोधानापत्तेश्च । तदर्थज्ञापकत्वेन स्मरणं तु नार्थोपस्थापकं शक्ततावच्छेदकानुपूर्व्यग्रहात्, तद्वाचकसर्वनामस्मरणाननुभवाच्च, उच्चारितस्यैव बोधकत्वेन स्मृतसाधुतो बोधासम्भवाच्च ।

न च शक्तिभ्रमाद्बोधः, पूर्वपूर्वभ्रमाच्चोत्तरोत्तरभ्रम इति पामराणां शक्त्यग्रहेऽपि तद्भ्रमोपपत्तिरिति वाच्यम्, घटत्वादिविशिष्टघटादिरूपार्थनिरूपिताया घटादिपदवृत्तित्वेन गृहीताया भिन्नानुपूर्वीकत्वरूपविशेषदर्शनसत्त्वेन साधारणधर्मदर्शनाभावेन च गगरीपदादौ भ्रमानुपपत्तेः । यदि तु अशक्त्या केनचिद् 'गगरी' इति प्रयुक्ते ऽम्बाम्बेत्यादाविव घट इति साधुशब्दस्मरणात्प्रयोज्यस्य बोधे तटस्थस्य गगरीशब्दादेवास्य बोध इति भ्रमेणाद्यस्य शक्तिभ्रमस्तन्मूलकश्चान्येषामपि । तदुक्तं हरिणा—

तादात्म्यमुपगम्यैव शद्बार्थस्य प्रकाशकाः । इति ।

इवशब्देन तदुपगमस्य भ्रमत्वं सूचितम् । तादात्म्यस्य शक्तित्वं च स्पष्टमेवोक्तम् ॥

( कुञ्जिकाटीका )

इदानीं मतान्तरमाह । सा चेति । ननु व्यवहारदर्शनस्य कथं शक्तिग्राहकत्वं तद्बोधकशब्दाभावात् शक्तिग्रहाभावे इष्टसाधनत्व-

ग्रहाभावात्स्तनपाने प्रवृत्त्यनापत्तेरत आह—व्यवहारदर्शनेनेति । व्यवहारदर्शनमुद्बोधकविधया स्मारकमेवेति लाघवं। जीवनादृष्टमिवोद्बोधकमित्यर्थः । अत एव—पूर्वजन्मानुभूतस्मरणस्वीकारादेव । अन्यथा इष्टसाधनताज्ञानाभावात् स्तनपानादौ प्रवृत्तिर्न स्यात् । पश्वादीनां च जडप्रायाणां प्रतिनियतजात्यनुसारेणैव नियतैव काचित्प्रतिभा बोध्यते, अतस्तेषामप्यनादिवासनैव बीजमिति भावः। तदैव—आद्यबोधकाले एव । तत्सम्भवः-शक्तिग्रहसम्भवः । न चेति । वाच्यमित्यत्रान्वयः। तदुक्तं हरिणा—

असाधुरनुमानेन वाचकः कैश्चिदिष्यते

इति । वाचक इत्यस्य बोधक इत्यर्थः। अयम्भावः। न हि विद्वांसोऽपभ्रंशादेव साक्षादर्थं पश्यन्ति इति नापशब्दानामर्थेन सम्बन्धः। अपशब्दास्तु सादृश्यात्साधुशब्दमनुमापयन्ति । साधुस्मरणादिति यदुक्तं तत्र मानमाह-ते साधुष्विति । ते असाधवः । साधुषु। साधुस्मरणेन । बालः अव्यक्तं भाषते, साधुविदां व्यक्ते निश्चयो भवतीत्यर्थः । तज्ज्ञानम्-साधुस्मरणम् ।

विनापीति । अयम्भावः, 'अर्थगत्यर्थः शब्दप्रयोगः' ।अर्थावगतेश्चापशब्देभ्यो ऽप्यविशिष्टत्वात्तेषामप्यर्थेन सम्बन्ध इति । एतदर्थबोधकं किञ्चित्साधुपदं भविष्यतीत्यनुमानाद्बोध इति मतं निराकरोति-नार्थेति । शक्ततावच्छेदिकाया आनुपूर्व्या ज्ञाने एव वाच्यस्योपस्थितेरित्यर्थः । तद्वाचकतदादिपदस्मरणाद्बोध इत्यपि निराकरोति । अननुभवाच्चेति । ननु पामराणां घटादिपदे शक्तिग्रहाभावात्कथं तत्सादृश्यमूलको गगरीशब्दे भ्रम इत्याशङ्क्याह—पूर्वपूर्वेति । यस्य शक्तिग्रहपूर्वको भ्रमस्तद्वदित्यर्थः । घटत्वविशिष्टेति । घटनिरूपिताया घटपदनिष्ठायाः शक्तेः गगरीपदे भ्रमो न सम्भवति वर्णभेदरूपविशेषदर्शनसत्त्वात् न हि अकरचरणादिमत्त्वनिश्चयानन्तरं स्थाणौ पुरुषत्वभ्रमो भवति।

यदि चेति । अशक्त्या गगरीशब्दोऽनेनोच्चारित इत्याद्यपुरुषेण ज्ञाते ततो द्वितीयपुरुषस्य गगरीशब्द एव बोधक इति भ्रम इत्यर्थः। तादात्म्यमुपगम्यैवेति । अपभ्रंशाः साधुशब्दैरभेदमिवापन्ना अर्थस्य प्रकाशका इत्यर्थः। तादात्म्यस्येति।अयम्भावः-अयमर्थ इत्यभेदेन व्यवहारादध्यासलक्षणं शब्दार्थयोस्तादात्म्यं, स एव मुख्यःसंबन्धः।सम्ब-

न्धान्तरकल्पने तु तस्यापि सम्बन्धान्तरं कल्प्यमित्यनवस्थानात्, प्रतीतावर्थस्यापि विषयभावेनापेक्षणात्, परत न्त्रत्वसामान्यात्सम्बन्धत्वव्यवहार इवशब्देनेति। साध्वसाध्वोस्तादात्म्यस्य तात्त्विकत्वे चासाधूनामपि बोधकत्वमागतमिति ग्रन्थकार एव आहार्येन—तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशका, इत्यर्थाभिप्रायेणाह-इवशब्देनेति। इवशब्देन शक्तेर्भ्रमः सूचित इत्यर्थः॥

( कलाटीका )

एवं शक्तिं निरूप्य प्रागुक्ततदाश्रयविषये परमतखण्डनाय विशेषमाह-सा चेति। वाच्यवाचकभावाख्येत्यर्थः। शक्तीति। तद्ग्राहकतादात्म्येत्यर्थः। मतान्तरमाह—अन्त्रेति। चस्त्वर्थे। इदं दृढयति। अत एवेति। शक्तिस्मरणाङ्गीकारादेवेत्यर्थः। ननु स्मरणवद्ग्रहोऽपि तेषां संभवतीति किमिति तत्पक्षत्यागोऽत आह-न हीति। तेषाम्। बालादीनाम्। तदैव बोधप्राक्काले एव। तत्सम्भव इति। अयोग्यत्वादिति भावः। अत्रान्ये इत्यरुचिबीजन्तु प्राथमिकसर्गादौ नैतत्संभव इति। अत्र नैयायिकाः "व्युत्पन्नानां साधुस्मरणात् बोधो, ऽव्युत्पन्नानां शक्तिभ्रमाद् बोध, इति न तेषु शक्तिकल्पना" इति। तत्राद्यपक्षं खण्डयति-न चेति। ततः। अपभ्रंशात्। वैयाकरणस्यापदिमावश्यकमिति सूचयितुमाह—ते साधुष्विति। यद्यपि 'इतव' इत्यग्रे

तादात्म्यमुपगम्यैव शब्दार्थस्य प्रकाशकाः।
न शिष्टैरनुगम्यन्ते पर्याया इव साधवः॥ १॥
न यतः स्मृतिशास्त्रेण तस्मात्साक्षादवाचकाः॥ २॥

इति। अग्रे ऽम्बाम्बेति हरिग्रन्थे दृश्यते तथाप्यनुपयुक्तत्वादत्रानुल्लेखः।

एवं साध्वौ प्रयोक्तव्ये यो ऽपभ्रंशः प्रयुज्यते।
तेन साधुव्यवहितः कश्चिदर्थो ऽभिधीयते॥ ३॥

इत्यस्य निश्चय इत्यस्मादग्रिमस्यैव विवक्षितार्थस्य तावतैव लाभादिति भावः।

ननु स्मरणाद् बोधे ऽनुमितिघटितहर्युक्तेः कथं हेतुत्वमत आह। अनुमेति। तदसम्भवात् व्याप्तिग्रहादिविलम्बेन तस्यानियतपूर्ववृत्तित्वाच्च। अत्र, न तु सर्वत्रेति भावः। तावताप्यनुभवाद्यसम्भवादाह-साध्विति। साधुष्विति विषयसप्तमीत्याह—विषयेति। यदा तादृशो

वालः अव्यक्तं तत्प्रभाषते तदा तद्विदां । तेनापभ्रंशेन । व्यक्ते साधुश-ब्दज्ञाने निश्चयो भवतीत्यर्थः । तदेतद्धृदि निधायाह–तद्विदामिति । एतेन तद्रहितानां तदभावे ऽपि न क्षतिरिति सूचितम् । अत एवै-तस्यात्रोल्लेखः । अन्यथार्धश्लोकेनैव निर्वाहे ऽस्याधिक्यं स्पष्टमेव । ननु एकसम्बन्धीति रीत्या स्मरणं सति सम्बन्धे ऽत्र तु न सो ऽत आह–असाधोरिति । तथाच तद्घटकयत्किञ्चिद्वर्णादिरेव साधा-रणधर्म इति भावः । तज्ज्ञानम्–साधुस्मरणम् । तत्रादौ विशेष-व्युत्पन्नस्थले दोषमाह—साध्विति । ननु तादृशानुभवे एव विप्र-तिपत्तिः, कारणं विना कार्यानुभवस्य काप्यभावेन मानाभावश्च, फलबलेन तस्य नियमेन कल्पनं चात स्तत्र न दोषो ऽतः सा-मान्यव्युत्पन्नस्थले दोषमाह—तद्वाचकेति । अपभ्रंशबोध्यार्थवाच-केत्यर्थः ।

ननु व्युत्पन्ना द्विविधाः तत्तद्वाचकसंस्कृतविशेषज्ञानवन्तः, त-द्विकलाश्च । तत्राद्यानां तथाबोधे ऽपि द्वितीयाऽनुपपत्तिर्दुस्त्या सा न युक्ता तेषां सामान्यज्ञानसत्त्वेन तदर्थज्ञापकत्वेन रूपेण तत्साधुस्मर-णाद्बोधसंभवादत आह—तदर्थेति । अपभ्रंशबोध्यार्थज्ञापकत्वे-न । वस्तुतः तद्वाचक साधुस्मरणाद् बोधसम्भवादत आह–त-दर्थेति । अपभ्रंशबोध्यार्थज्ञापकत्वेन । वस्तुतस्तु तद्वाचक-साधुस्मरणमित्यर्थः । स्थापकमिति । तथाच बोधः सुतरां नेति भावः । आनुपूर्वीग्रहस्य यथा कारणत्वमावश्यकं तथाग्रे स्फुटीभ-विष्यति ।

नन्वेवमपि सर्वनामस्मृतेस्तेषां बोध इति नोक्तदोषो ऽत आह–तद्वाचकेति । बुद्धिस्थत्वेन तद्वाचकेत्यर्थः । नन्वननुभवे विप्रतिप-त्त्यादि दोषः प्रागुक्त एवातः सर्वसाधारणप्रबलदोषमाह–उच्चारि-तेति । इदं चाग्रे स्फुटीभविष्यति । एतेन फलबलेनानुमितिसामग्र्या-नियमेन कल्पनमिति तत्रत्योक्तमपास्तम् । संस्कृतैरयमर्थो न बुद्धः कि-न्त्वेतदुक्तभाषयेति व्युत्पन्नव्यहाराच्चेत्यपि बोध्यम् । तस्मात्सामान्य-व्युत्पन्नस्थले दोषस्तदवस्थ एव, उक्तहरिस्तु परमतानुवादक इति न तद्विरोधदोषः । एतद्विरुद्धस्यापि हरेर्वक्ष्यमाणत्वादिति भावः ।

अथ तदुक्तद्वितीयपक्षं खण्डयति । न च शक्तीति । पामराणा-मिति शेषः । ननु तेषां शक्तिग्रहे कथं तद्भ्रमो ऽत आह–पूर्वपूर्वेति ।

चस्त्वर्थः । तदिति । शक्तिभ्रमेत्यर्थः । सिद्धान्तमतेनाह । घटत्वेति । परमते तु तत्पदार्थघटितेश्वरेच्छाया इत्यादौ बोध्यम् । अत एव तत्तत्पदार्थं घटितव्याप्ते न भ्रमः इति तत्र नैयायिकाः । घटे ऽन्वयोऽस्य गृहीतायाः शक्तेरिति शेषः । नव्यनैयायिकोक्तयुक्तिं खण्डयितुमाह–यदित्विति । अशक्तेत्यस्य घटशब्दे प्रयोक्तव्य इत्यादिः । दृष्टान्तेन प्रागुक्तहर्युक्तरीतिः सूचिता । आद्यस्य–तटस्थस्य । इदं वैयाकरणस्याप्यवश्यकमितिसूचयितुमाह—तदुक्तमिति । ते साध्विति पूर्वार्धान्ते इत्यनुवर्तते । अपभ्रंशाः तादात्म्यशक्तिमुपगम्येव नतु वस्तुतः । स्वीकृतशब्दार्थस्य प्रकाशका इत्यर्थः । तदाह–चेति । एतेनोपगम्यैवेति नैयायिकपाठो भूषणकृदादीनां साधुस्मरणोपयोगित्वेनैतत्पाठश्चापास्तः । नन्वनेन तादात्म्योपगमसादृश्याङ्गीकारोक्तावपि तस्य शक्त्युपकारकत्वेन तद्भिन्नत्वात्कथं शक्तिभ्रमो हर्युक्तो ऽत आह—तादात्म्येति । चः प्राग्वत् । तथोक्त्येति भावः । अत एव तस्यापि पदनिष्ठश क्त्युपकारकत्वाच्छक्तिरिति व्यवहार इति प्रागुक्तम् ॥

तदुक्तं जैमिनिना–“तदशक्तिश्चानुरूपत्वात्” १।३।२८इति । तद्भाष्यकृताच तत्रोक्तरीत्या शक्तिभ्रम उपपादित इत्युच्यते तदा प्रत्येकं तत्तत्संस्कृतस्य तत्तदपभ्रंशेन विनिगमनाविरहात्तेषु शक्तिः । न च सकलदेशशिष्टपरिगृहीतत्वं विनिगमकं, “शवतिर्गतिकर्मा कम्बोजेषु, विकारे एवैनमार्या भाषन्ते” इत्यादिभाष्यरीत्या तत्तद्देशनियतसंस्कृतेषु शक्तिसिद्ध्यनापत्तेः, वाचकस्य व्यञ्जकत्वे आलङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गत्यापत्तेश्च, तत्तद्देशीयशिष्टानां तत्तद्भाषासु जायमानस्य निर्विचिकित्सशक्तत्वप्रत्ययस्य बाधकं विना भ्रमत्वायोगाच्च । अत एव स्त्रीशूद्रबालानां प्रयुक्ते साधौ अर्थसंशये तदपभ्रंशेन निर्णयः ॥

( कुञ्जिकाटीका )

तदशक्तिरिति । तस्य साधुशब्दस्य अशक्तिः । अशक्त्या करणापाटवेनान्यथा उच्चारणमनुरूपत्वात्समानवर्णत्वादित्यर्थः । शवतिरिति । गत्यर्थकः शवधातुः कम्बोजदेशे, आर्येषु तु जनपदेषु विकारे ऽर्थे प्रयुज्यते शवो मृतक इतीत्यर्थः । वाचकस्य व्यञ्जकत्वे इति । यथा—

पन्थिअ ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअ पओहरं पेक्खिअ उण जइ वससि ता वससु । इति ।
पथिक न अत्र संस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे ।
उन्नतपयोधरं प्रेक्ष्य पुनर्यदि वससि तदा वस ।

इति तस्यार्थः । अत्र पाषाणमयग्रामे आस्तरणं नास्ति । पयोधरो मेघः स्तनश्चेति श्लेषः । अत्र पयोधरशब्देनोपभोगक्षमत्वं व्यज्यते तदपभ्रंशस्य पओहरशब्दस्य तत्र वाचकता व्यवहारः । शक्तिभ्रमस्यात्यन्तमसम्भवं दर्शयति–अत एवेति । प्रयुक्ते साधौ स्त्रीशूद्रबालानामर्थसंशय इत्यन्वयः । ननु यवशब्देन दीर्घशूकविशेष एव ग्राह्यो न कङ्गुरित्येतत्प्रतिपादकतदधिकरणासङ्गतिः शब्दशक्तेरुभयत्र तुल्यत्वादत आह—इदं तात्पर्यमिति । यत्तु 'वसन्ते सर्वसस्यानां जायते पत्रशातन'मिति वाक्यशेषान्निर्णय इति तन्न । पैलवौदुम्बरौ वैश्यस्य दण्डावित्यत्र वाक्यशेषाभावात्पीलुशब्देन हस्तिनो ऽपि ग्रहणापत्तौ हस्तिभवास्थिदण्डस्यापि ग्रहणापत्तेः ॥

( कलाटीका )

अन्यसम्मतिमप्याह—जैमिनिना चेति । उक्तमित्यस्यानुषङ्गः । तदशक्तिरिति । तेषामपभ्रंशानां न शक्तिः किन्तु शक्तिभ्रमः अनुरूपत्वात्तत्सदृशत्वादित्यर्थः । ननु सूत्रस्याग्रे वक्ष्यमाणसिद्धान्तभूतार्थान्तरपरतयापि सुयोजत्वमत आह—तद्भाष्येति । शबरस्वामिनेत्यर्थः । तथा चोक्तो ऽर्थ एवैतदनुरोधेनेति भावः । तत्र–गगर्यादौ । भाषाणां नानात्वेन गौरवनिरासायाह–प्रत्येकमिति । संस्कृतवन्महाराष्ट्रभाषायाः अपि सर्वत्रैकत्वात् । एतेन तासां नानात्वेन भाषान्तरैर्विनिगमनाविरहान्नैकत्र शक्तिरित्यप्यपास्तम् । संस्कृतेषु प्रत्येकं भाषाभिर्विनिगमनाविरहात् । तेषु—अपभ्रंशेषु । अदृष्टोत्पत्त्यर्थं स्वीकारश्चपरिग्रहः। अतस्तादृशाकिञ्चिदपभ्रंशसत्वे ऽपि न क्षतिः विनिगमकं

संस्कृतेष्वेव शक्तौ, अपभ्रंशे तदभावात्, इत्यादीत्यादिना "हंमतिः सुराष्ट्रेषु रंहतिः प्राच्यमगधेषु गमिमेव त्वार्याः प्रयुञ्जते" इत्यादिपस्पशास्थपरिग्रहः। अनापत्तेरिति। सकलदेशशिष्टापरिगृहीतत्वात्। एवञ्च दुश्च्यवनशब्दस्येन्द्रे, एडमूकादिशब्दानां मूकबधिरादौ शक्तिरपि न स्यात्, शिष्टैस्तदप्रयोगात्। अत एवाप्रयुक्तत्वदोषकथनावसरे दुश्च्यवनादिशब्दानुदाजहार प्रकाशकृत्। न च कोशप्रामाण्येन तत्र तत्कल्पनम्। शक्तिभ्रमेण कोशकृतां तत्पाठ इत्यस्यापि कल्पयितुं शक्यत्वादिति भावः।

ननु मास्तु तत्रापि शक्तिरिति वादिनं भ्रान्तं प्रत्याह—वाचकस्येति।

माए घरोव अरणं अज्जहु णत्थिति साहिअं तुमए।
ता भण किं करणिज्जं एवं जेव ण वासरो थाई॥
मातर्गृहोपकरणं अद्य खलु नास्तीति साधितं त्वया।
तत्कथय किं करणीयमेवमेव न वासरः स्थायी॥

अत्र स्वैरविहारार्थिनीति व्यज्यते। अयम्भावः—न संस्कृतत्वं न वा भाषात्वं शक्त्यवच्छेदकं किन्त्वानुपूर्वी सा च भिन्नभिन्नैव सर्वत्रेति घटकलशादिपर्यायवाचकेष्विव नैकेनापरान्यथासिद्धिरिति भाषासु शक्तिरेवेति। यद्यपि वाच्यस्य व्यञ्जकत्वे इदमुदाहृतं तत्र, तथापि तेषामशक्तावबाच्यत्वेन तदसङ्गतिरेवेत्याशयेन वाचकस्येत्युक्तम्। ननु तदपि तथास्त्विति वादिनं भ्रान्तं प्रत्याह। तत्तदिति। निर्विचिकित्सेति। निःसन्दिग्धेत्यर्थः। चिनेति। बोधकत्वस्याबाधितत्वादिति भावः। युक्त्यन्तरमप्याह—अत एवेति। अपभ्रंशेषु शक्त्यङ्गीकारादेवेत्यर्थः। बालानामित्यस्य व्यवहितान्वयः। प्रयुङ्क्ते इत्यस्यान्येत्यादिः।

आर्यम्लेच्छाधिकरणस्य तु इदं तात्पर्यम्। तत्र हि यद्यपि आर्या यवशब्दं दीर्घशूके प्रयुञ्जते, तमेव च बुध्यन्ते, म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते, तमेव च बुध्यन्ते। म्लेच्छपदेनानार्याः। तथापि आर्यप्रसिद्धेर्बलवत्त्वाद्वेदे दीर्घशूकपरतैवेति सिद्धान्तितम्। तत्र हि शास्त्रनिर्गतिकमैत्याद्युक्तभाष्याद् द्वयोरपि शक्तिग्रहाद्बोधेनो-

अयत्रापि साधुत्वेन शक्तत्वेन च तृतीयस्य सन्देहे विकल्पबोधे वा आर्यप्रसिद्धेर्बलवत्त्वाद्भेदे तद्बोध एवोचित इति। एवञ्चानार्यैरपि यज्ञे यवा एवोपादेयाः, पूर्वपक्षे तु अनार्यैः प्रियङ्गव एवोपादेया इति विशेषः। तदुक्तं हरिणा--

शब्दतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः। इति।

आर्याणां शिष्टत्वात्तत्प्रसिद्धेर्बलवत्त्वमिति बोध्यं न तु अनार्यप्रसिद्धे ऽर्थे ऽशक्तत्वे ऽसाधुत्वे वा तात्पर्यम्। जैमिनिरप्याह–"तेष्वदर्शनाद्विरोधस्य समा विप्रतिपत्तिः स्यात्" इति(१.अ०पा०३सू०८) यवशब्दे उभयथा शब्दार्थावगमाद्विकल्पः स्यादित्यर्थः।

एवं पूर्वपक्षे सिद्धान्तसूत्रं "शास्त्रस्था वा तन्निमित्तत्वात्"१।३।९ इति। यः शास्त्रस्थानां शिष्टानां स शब्दार्थः वेदे इति शेषः। तेषामविच्छिन्ना स्मृतिः शब्देषु वेदेषु च। ते शिष्टा हि श्रुतिस्मृतिधारणे निमित्तमित्यर्थः। यत्तु दीर्घशूकेषु शक्तः सादृश्यात् प्रियङ्गुषु प्रयुज्यते पूर्वसस्ये क्षीणे द्वयोरप्युत्पत्तेः, तच्च तयोः सादृश्यमिति शबरस्वामी।

अत्र वदन्ति तदा एकस्य गौणत्वमिति विकल्पपूर्वपक्षासङ्गतिः। किञ्च "यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्ति"इति दीर्घशूकान् यवान् दर्शयति वेदे, इति भवदुक्त्यसंगतिः प्रियगूणामपि तथैवोत्पत्तेः। अन्यथा भवदुक्तसादृश्यासङ्गतिः वाक्यशेषो ऽप्युक्तयुक्तिमूलक इति दिक्।

कुञ्जिकाटीका :

उक्तभाष्यादिति । तेन तत्र शक्तिभ्रमो न शङ्कनीय इति भावः। द्वयोरपि । आर्यम्लेच्छयोरपि । उभयत्रापि । कङ्गौ दीर्घशूके च । साधुत्वेनेति । म्लेच्छदेशे कङ्गावेव यवशब्दः साधुरित्यर्थः । विकल्पेति । प्रसिद्धिद्वयेन विकल्पः स्यादित्यर्थः । अत्र यवशब्देन दीर्घशूकविशेष एव ग्राह्यः "यत्रान्या ओषधयो म्लायन्त" इति वाक्यशेषादिति सिद्धान्तितं भाष्यकृता शबरस्वामिना । एतच्च वार्तिककारो नाभ्युपैति आर्यप्रसिद्धेर्बलवत्त्वादेव निर्णये वाक्यशेषोपन्यासवैयर्थ्यापत्तेः । तस्माद्यत्रार्याणामेव शब्दार्थाभिधानसंशयस्तत्रैव वाक्यशेषेण निर्णय इति । वस्तुतस्तु वारुणप्रघासिककरम्भपात्रेषु एव यवशब्दस्य दीर्घशूकपरता स्यात्तत्रैव वाक्यशेषसत्त्वात् न तु दार्शपौर्णमासिकद्रव्यविधायकयववाक्ये तत्र वाक्यशेषाभावात् । तस्माद्वाक्यशेषो ऽभ्युच्चयत्वेनोक्त इत्यभिप्रेत्याह—आर्यप्रसिद्धेरिति ।

यज्ञे यवा एवेति । तेषामेवापूर्वजनकत्वात् । शब्दतत्त्वम् । शब्दविशेषार्थविशेषतादात्म्यम् । शिष्टाः अतीन्द्रियार्थदर्शिनः । ते हि इन्द्रियव्यापारमन्तरेणापि शब्दार्थयोः सम्बन्धं पश्यन्ति तदुपदेशपारम्पर्याच्चास्मदादीनामपि सास्नादिव्यञ्जनसहकारेणार्थाभिव्यक्तिः । व्यवस्थिता इति । प्रमाणत्वेनेति शेषः । न तु अनार्येति । यवशब्दस्य कङ्गौ नाशक्तत्वं नाप्यसाधुत्वमित्यर्थः । तेष्वदर्शनादिति । तथाच वार्तिकम् ।

स्मृत्याचारविरोधे वा साम्यवैषम्यसंशये ।
समा विप्रतिपत्तिः स्यान्मूलसाम्याद्द्वयोरपीति ॥

शब्दार्थस्य लोकप्रमाणकत्वेन विरोधाभावात्समा विप्रतिपत्तिः स्यादित्यर्थः ।

तेषाम् । शिष्टानाम् । अविच्छिन्नेति । पारम्पर्यायातेत्यर्थः । शब्देषु वेदेषु चेति । यवशब्दो दीर्घशूकविशेषस्यैव वाचकः स एव वेदे गृह्यत इत्याकारेत्यर्थः । एकस्य गौणत्वमिति । सादृश्यात्तु कङ्गौ प्रयोगे गौणत्वेन समत्वाभावाद्विकल्पाशङ्का असङ्गतेत्यर्थः । यत्रान्या ओषधय इति । वसन्तकाले तथा सम्भवः । तथैव—पूर्वसस्यक्षये एव । अन्यथेति । प्रियङ्गूणामन्यथोत्पत्तिस्वीकारे भव-

दुक्तसादृश्यासङ्गतिरित्यर्थः । ननु आर्यप्रसिद्ध्या दीर्घशूकग्रहणे उक्तवाक्यशेषवैयर्थ्यमत आह–उक्तयुक्तीति । आर्यप्रसिद्धिबलवत्त्व रूपेत्यर्थः ॥

( कलाटीका )

ननु तत्तद्देशनियतसंस्कृतस्यापि सर्वत्र शक्तिस्वीकारे आर्यम्लेच्छाधिकरणासङ्गतिः तेनानार्यप्रसिद्धेऽर्थेऽशक्तत्वप्रतिपादनादत आह—आर्येति । इदं वक्ष्यमाणम् । तत्रादौ तद्विषयमाह—तत्र हीत्यादिना सिद्धान्तितमित्यन्तेन । तत्र हीत्यस्य सिद्धान्तितमित्यत्रान्वयः । आर्यम्लेच्छाधिकरणे हीति तदर्थः । ननु म्लेच्छशब्देन प्रसिद्धार्थग्रहणे तेषां तत्र प्रयोगेऽपि वेदे तत्प्रसक्त्यभावाच्छङ्कैवायुक्ता, न तेषां तत्र प्रसिद्धिस्ते तद्विरोधिविशेषाः । किञ्च तेषां भाषया व्यवहारेण संस्कृतमयशब्दप्रयोग एव दुर्वचोऽत आह–म्लेच्छेति । म्लेच्छअव्यक्ते शब्दे इतिधात्वनुसारात् प्राचुर्येणापशब्दभाषणकर्तृत्वेन ते उच्यन्त इति भावः । आर्याणां दीर्घशूकबोधोऽनार्याणां प्रियंगुबोधः, तत्तात्पर्यमाह–तत्र हीति । यवादिशब्दस्थले हीत्यर्थः । द्वयोरपि । प्रियङ्गुदीर्घशूकयोरपि । शक्तत्वमेव साधुत्वमिति जीर्णनैयायिकमतस्य लक्षणया तत्त्वस्य च तदुभाष्योक्तस्य निरासायाह–शक्तत्वेन चेति । तृतीयस्य–आर्यानार्यभिन्नस्य । सन्देहे प्राप्ते सति तथा तयोर्मध्ये कस्याप्यबोधः । ननु बोधसामग्रीसत्त्वात्कथं सन्देहोऽत आह—विकल्पेति । पृथक्शक्तिग्रहेण यौगपद्यासम्भवादिति भावः । तद्बोध एवेति । एवेन तद्व्यावृत्तिः । अत एव तैरपि सिद्धान्ते 'वेदे' इत्युक्तम् , अन्यथा तदाधिक्यं स्पष्टमेव । एवञ्च संयोगादिवद् आर्यप्रसिद्धेरपि शक्तिसङ्कोचकत्वम् , इति अधिकरणगूढाभिमतमिति भावः ।

ननु तेषां वेदे तथा बोधस्यैवौचित्येन तस्यैवानुष्ठानेऽप्यनार्याणां स्वप्रसिद्ध्या तस्यैव पक्षद्वये बोधादनुष्ठानाच्च को विशेषः पूर्वपक्षसिद्धान्तयोः अन्यथा शङ्काद्यसङ्गत्यापत्तिः, अन्यविशेषस्तु नात्र सम्मतोऽत आह—एवञ्चेति । वेदे तद्बोधस्यैवौचित्येचेत्यर्थः । अपिः तृतीयसमुच्चायकः । एवेन प्रियङ्गुव्यावृत्तिः । अग्रे एवेन दीर्घशूकव्यावृत्तिः । तृतीयस्य तत्र विकल्पानुष्ठानादाह–अनार्यैरिति । यज्ञे इत्यस्यानुषङ्गः । अर्थादार्यैर्यवा एव तत्रेति बोध्यम् । स्वप्र-

सिद्धा तत्रोपादीयन्ते पक्षद्वयेऽपि इति चेत्, तृतीयविषयकमप्यधिकरणं। उक्ताधिरणस्य तथातात्पर्यार्थे हर्येकवाक्यतामाह–तदुक्तमिति। नार्थविषयकमिति। न विशेषान्तरसम्भावनापीति। शब्दतत्वं स्फोटरूपम्। ते शब्दार्थविषये नियताः यतस्तद् विद इत्यर्थः। उभयत्र शक्तोऽयं शब्दः। साधुरपि क्वचिदन्यतरार्थबोधक एवेत्येवं निश्चये नियतप्रमाणभूता इति यावत्।

ननु हर्यधिकरणयोर्मिथोविरोधः तत्रार्यप्रसिद्धे र्बलवत्त्वमुक्तम्, अत्र तु शिष्टानां, तत्त्वं च आर्यानार्यसाधारणमिति कथं तत्रेदं मानमत आह–आर्याणामिति। एवञ्च तेषां पृषोदरादिसूत्रभाष्यप्रतिपादितं शिष्टत्वमेव नेति भावः। स्पष्टार्थमुक्तहेतोरेव पूर्वपक्ष्युक्तमीमांसकसम्मततात्पर्यं निराचष्टे। न त्विति। येन मम विरोधः स्यादिति भावः। न स्वशक्तत्वे तात्पर्ये ऽन्यत्र बोधो न स्यादत आह–असाधुत्वेवेति। एवमधिकरणाशये हरिसम्मतिमुक्त्वा मीमांसकाशयं प्रकटयितुं तन्मूलसम्मतिमाह—जैमिनिरपीति। तेषु–यवादिशब्देषु। अदर्शनात्–देशकर्तृभेदात्। समेति–तटस्थस्येति भावः। एवमग्रेऽपि तदाह–यवेति। यवादीत्यर्थः। अवगमात्। आर्यम्लेच्छयोर्विकल्प इति। एतेनापि पूर्वसन्देहपक्षो नादृतः।

शास्त्रस्थानामिति सूत्रे पाठः, तमेव शेषपूरणेन व्याचष्टे–य इति। प्रतिपत्तिविषय इत्यर्थः। शिष्टपदप्रवृत्तिनिमित्तशिष्टेः शासनस्य शास्त्रज्ञानपूर्वकत्वमित्यर्थक'शास्त्रपूर्विका हि शिष्टिरिति पृषोदरादिसूत्र भाष्यो'क्तत्वात्तदर्थमाह—शिष्टानामिति। ननु नायं नियमो लोके, अत्रैव व्यभिचारात्, प्रियंगोरपि शब्दार्थत्वादत उक्ताधिकरणसिद्धं तात्पर्यमेवाह–वेदे इति। शेष इति। तत्र हेतुं व्याख्यातुमाह–तेषामिति। शब्देषु। वैदिकभिन्नेषु। हेतुमाह–ते शिष्टा हीति। धारणं च शब्दार्थनिर्णयद्वारा तदर्थानुष्ठातृत्वेन तत्स्वीकरणम्। तथाच तन्निमित्तत्वादिति बहुव्रीहिर्बोध्यः। एतत्सूत्रव्याख्यानमन्यदीयं खण्डयति। यत्त्विति। (अयम्भावः–शास्त्रस्थानां नैयायिकादीनां यः सः शब्दशक्यः। प्रियङ्गौ प्रयोगस्तु तन्निमित्तत्वात् तन्निष्ठसाधारणधर्मनिमित्तकसादृश्यादिति सूत्रार्थ इति।) शक्तः–यवशब्दः। द्वयोरपि। प्रियङ्गुदीर्घशूकयोरपि। तच्चेति। तदेव चेत्यर्थः। नन्वयमर्थः पूर्वपक्षाभिमत, उतसिद्धान्त्यभिमत, उताभयसाधारणो मूलभूतवस्तुस्थि-

निरूपः,तत्र नाद्यः उद्क्षरत्वेन तत्सूत्रतोऽलाभात् तदाह–तदेति।एकत्र शक्तिरेकत्र सादृश्यात्प्रयोग इत्यर्थः। एकस्य प्रियङ्गोः।सादृश्यसम्बन्धमूलकलक्षणाया एव गौणीत्वादिति भावः। इतिरसङ्गतौ हेतुत्वबोधकः 'तुल्यार्थास्तु विकल्पेरन्' इति न्यायविरोधादिति भावः।

विकल्पेति। प्रियङ्गूणां ग्रहणं दीर्घशूकानां वेत्येवं रूपेत्यर्थः। नन्वेवमस्तु द्वितीयपक्षस्तस्य तत्सूत्रार्थत्वसम्भवात्। तथाहि–शास्त्रस्थानां नैयायिकादीनां यः स शब्दशक्यः। प्रियंगौ प्रयोगस्तु तन्निष्ठसाधारणधर्मनिमित्तकसादृश्यादित्यत आह–किंचेति।(ननु गौणत्वमुख्यत्वकृतभेदे तुल्यप्रयोजनकत्वाद्विकल्पसङ्गतिरेवात आह। किञ्चेति) यत्र देशे यदेत्यपि बोध्यम्। अथ तत्क्षणानन्तरं तत्रेति शेषः। एते। दीर्घशूकाः। इतीत्थस्य वेद इत्यत्रान्वयः। अन्यथा तथोत्पत्त्यनङ्गीकारे। अर्थादुभयासङ्गत्या तृतीयपक्षोऽपि निरस्तो वेदितव्यः।

नन्वस्तु तद्ग्रन्थासङ्गतिस्तथापि 'यत्रान्या' इति वाक्यशेषासङ्गतिः, तेनोभयलाभेन तस्येष्टार्थासाधकत्वात् , अधिकरणेन तु एकस्यैव लाभ इति विरोधश्चात आह। वाक्येति। यत्रान्या इत्यादीत्यर्थः। उक्तयुक्तीति। शिष्टार्यप्रसिद्धिबलवत्त्वरूपयुक्तिमूलक इत्यर्थः। तां युक्तिं हृदि निधाय तानेव तत्र दर्शयतीति भावः। अन्यथा तद्विरोधादधिकरणासङ्गतिरेव स्यात्। किञ्च लोकप्रयोगपरतया सोऽपि साधारण एवास्तु। एतेनोक्तवाक्यशेषाद्दीर्घशूके शक्तिरिति निर्णयः, कङ्गौ तु शक्तिभ्रमात्प्रयोगः, नानाशक्तिकल्पने गौरवात्,हर्यादौ त्वविनिगमकान्नानाशक्तिकल्पनमिति नैयायिकोक्तमपास्तम्,उक्तयुक्तेः। किञ्चार्यम्लेच्छाधिकरणमपि सर्वेषां शक्त्यङ्गीकारे एव सङ्गतम्। अन्यथा म्लेच्छबोधस्य भ्रममूलकत्वेन भ्रान्तिविषयरजतज्ञानस्येव वस्त्वसाधकत्वेन कस्या बलवत्त्वमिति विचाराप्रवृत्तेः। तदाह–दिगिति॥

**न्यायभाष्यकारोऽपि "आप्तोपदेशः शब्दः" (अ० १ आ० १ सू० ७) इति सूत्रे "अर्थसाक्षात्कारवानाप्तः, स यथादृष्टार्थमुबोधयिषया यं प्रयुङ्क्ते स प्रमाणशब्द इति ऋष्यार्यम्लेच्छानां समानमाप्तलक्ष-**

गम्"(१) इत्याह। तत्र ऋषिर्वेदः, म्लेच्छोऽपशब्दवक्ता। ततः सूत्रकृता "सामयिकः शब्दार्थप्रत्ययः" इति प्रमाणत्वेन लक्षितशब्दमात्रजप्रत्ययस्य तुल्यमेव सामयिकत्वमुक्तम्। सामयिकत्वं संकेत(समय)गृहीतसम्बन्धजन्यत्वमिति न ऋषीणां विरोधः। काव्ये च्युतसंस्कृतिदोषस्य दूषकताबीजं तु साधुपदसमुदायमध्येऽसाधुपददर्शनेन विप्रसभायां चाण्डालदर्शनेनेव सहृदयोद्वेग एवेति बोध्यम्।

साधुत्वं तु नापभ्रंशानां शिष्टैर्धर्मबुद्ध्या तदप्रयोगात्। नचैवं ततो बोधानापत्तिरसाधुत्वनिश्चयस्य तत्प्रतिबन्धकत्वादिति वाच्यं, तत्सत्त्वेऽपि ततो बोधदर्शनेन तस्य तदप्रतिबन्धकत्वात्। साधुत्वं च व्याकरणव्यङ्ग्योऽर्थविशिष्टशब्दनिष्ठः पुण्यजनकतावच्छेदको जातिविशेषः तदुक्तम्—"एकः पूर्वपरयोः" (अष्टा० सू० ६-१-८४) इति सूत्रे भाष्ये—"एकः शब्दः सम्यक्ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवति" इति। सम्यक् ज्ञातः सम्यक्त्वेन साधुत्वेन ज्ञातः, शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणानुसंहितः, सुप्रयुक्तः शिक्षोक्तरीत्या प्रयुक्तः। तस्य च शिष्टप्रयोगको शव्याकरणाद्यनुमापकम्॥

( कुञ्जिकाटीका )

आप्तोपदेश इति। आप्तस्य भ्रमादिशून्यस्य य उपदेशः स शब्द इति तदर्थः। स इति। आप्तो यस्मिन्नर्थे यं शब्दं प्रयुङ्क्ते स तत्र प्रमा-

(१) "आप्तः खलु साक्षात्कृतधर्मा, यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याऽऽप्तिः। तया वर्तत इति। आप्तः" इति सांप्रतमुपलभ्यमानन्यायभाष्यपुस्तके पाठः। उपरिनिर्दिष्टं तु तस्य तात्पर्यम्।

णामित्यर्थः। यथेति। यथा येन प्रकारेण दृष्टं दर्शनं यस्य तादृशो यो ऽर्थ इत्यर्थः। समानमिति। तत्तदर्थबोधकतत्तच्छब्दप्रयोक्तृत्वादिति भावः। आर्यपदेन गतार्थतां निराकरोति। ऋषिर्वेद इति। प्रमाणत्वेनेति। प्रमाणत्वेन लक्षितो यः शब्दस्तस्माज्जातस्य प्रत्ययस्येत्यर्थः। एवं चापभ्रंशजस्यापि सामयिकत्वं तुल्यमिति भावः। ननु वेदार्थस्य समयप्रकाशितत्वं न सम्भवति वृद्धव्यवहारैः शक्तिग्रहे ऽपि वेदवाक्यस्य समुदायान्तरत्वादर्थेनाज्ञातसम्बन्धत्वात्तत्कल्पने सङ्केतापातात्सापेक्षत्वेनाप्रामाण्यापत्तिरत आह—समयगृहीतेति। लोकवेदयोरर्थभेदाभावाद्वेदवाक्यस्यापि लौकिकव्युत्पत्तिमूलकत्वेन सङ्केतानपेक्षत्वादनपेक्षमेव प्रामाण्यम्॥ ऋषीणामिति। वेदवाक्यानां सामयिकार्थबोधकत्वविरोधेनेत्यर्थः। ननु

दीनं त्वामनुनाथते स्तनयुगं यत्नाकृतं मा कृथा'

इत्यत्रात्मनेपदासाधुत्वे ऽप्यदोषः। कतोर्बहिरदोषादित्यत आह—काव्ये इति।

ननु दन्त्यमध्यास्वशब्दाद्वाजिबोधादर्शनेनासाधुत्वज्ञानं प्रतिबन्धकमत आह-तत्सत्त्वे ऽपीति। असाधुत्वनिश्चये सत्यपि भाषा शब्दादर्थबोधान्न प्रतिबन्धकत्वमिति भावः। अस्वशब्दस्य वाजिनि साधुत्वाभावादाह—अर्थविशिष्टेति। शिक्षोक्तरीत्येति। अम्बूकृतादिदोषराहित्येनेत्यर्थः। अस्य चेति। साधुत्वस्य चेत्यर्थः॥

( कलाटीका )

नव्यनैयायिकभ्रमं प्रकटयितुमपभ्रंशेषु शक्तौ साधकान्तरमप्याह-न्यायेति। वात्स्यायनोऽपीत्यर्थः। अत्रादौ पदार्थमाह-अर्थसाक्षादिति। अर्थविषयकयथार्थानुभववानित्यर्थः। अथ सूत्रार्थमाह-स इति। यथादृष्टेति। यत्प्रकारकयथार्थानुभूतार्थकर्मकपरसम्बन्धिबोधानुकूलेच्छयेत्यर्थः। अनेनातादृशस्य तत्प्रयुक्तस्याप्यतत्त्वं सूचितम्। उपदेश इति कर्मणि घञित्याह-यमिति। 'प्रत्यक्षानुमानोपमानशब्दाःप्रमाणानि'(अ.१सू.१) इति सूत्रस्योपक्रान्तत्वादाह-प्रमाणेति। तस्यैवात्र लक्ष्यत्वात्। अतएवोपक्रमोक्तैकवाक्यतेति भावः। इतीति। इतिसामान्यार्थेनेत्यर्थः। अन्यथा कस्यचिद्विशेषस्योपादानं कुर्यादिति भावः। ननु ऋषेरार्यत्वात्कथं भेदोक्तिरत आह—तत्रेति। त्रयाणां मध्ये इत्यर्थः। तदुक्तमृषिणेत्यादौ तथा दर्शनादिति भावः। ननु मु-

ष्यम्लेच्छग्रहणे न्यूनता, एवं प्रागुक्तानार्यग्रहणेऽप्यत आह--म्लेच्छ इति। अनेन रूपेण ऋष्यार्याभिन्नः सर्वोऽत्र म्लेच्छः। अतएवोक्तानार्य-संग्रहोपीति नाधिकरणविरोधोऽपि। एवञ्च यदि भवदुक्तवैषम्यं साध्व साध्वोस्तादृिष्टं स्यात्तर्हि तुल्याप्तत्वे न तुल्यप्रमाणशब्दत्वं कथमुक्तं त-स्मात्तत्र तस्य शक्तिरेवाभिमतेति भावः। एवं भाष्यसम्मतिमुक्त्वा सूत्रसम्मतिमप्याह-तत इति। एवमपभ्रंशसाधारण्येन प्रमाणशब्द-लक्षणकथनादग्रे इत्यर्थः। इति। अनेन सूत्रेण। प्राग्वत् शब्देत्य-स्यार्थमाह-प्रमाणेति। मात्रशब्दः कार्त्स्न्ये। उक्तसूत्रेण प्रमाणत्वेन लक्षिता यावन्तः शब्दास्तज्जन्यज्ञानस्येत्यर्थः। उक्तमिति। तेन हि ऋष्यार्यम्लेच्छशब्दानां समानमेव वाचकत्वमुक्तम्। अन्यथोक्तरीत्या तुल्यत्वोक्तिरसङ्गतैव स्यात्।

नन्वेवमपि वैयाकरणनैयायिकऋषीणां मिथो विरोधापत्तिः, आद्येन समयगृहीतसम्बन्धजन्यत्वमर्थज्ञाने उक्तम्, अन्त्येन तु साक्षात्स-मयजन्यत्वमुक्तमत आह-सामयीति। कत्वं चेति पाठः। मिथ इत्य-ग्रे शेषः। नन्वपभ्रंशे शक्त्यङ्गीकारे च्युतसंस्कृतित्वादेः काव्यदूषकत्वं न स्यात्, तद्बीजस्य शाब्दबोधासम्भवस्याभावादत आह-काव्य इति। दोषेति। तत्वरूपदोषे इत्यर्थः।

(१) न तथा बाधते स्कन्धो यथा बाधति बाधते।

इत्यादाविवेति भावः। पददर्शनेन—तच्छ्रवणेन। नन्वेवं तेषां साधुत्वस्याप्यापत्तिस्तुल्यत्वादत आह--साधुत्वं त्विति। शिष्टैरिति। इदं च तस्यानुमापकमित्यनुपदमेव स्फुटीभविष्य-ति। साधुत्वज्ञानं तु शाब्दबोधे न कारणं तदभावेऽपि बोधा-त्तदभिप्रेत्याह-न चेति। एवम्। तेष्वसाधुत्वनिश्चये। ततः। अप-भ्रंशतः। कत्वादिति। अत एव साधुतोऽप्यसाधुत्वनिश्चये बोधो न। तदिति। असाधुत्वनिश्चयसत्वेऽपि संस्कृतमविदुषां प्राकृता-दितो बोधेन तन्निश्चयस्य बोधाप्रतिबन्धकत्वादित्यर्थः। न च तत्र मानसो बोधः, अन्यत्रापि तथात्वापत्त्या शाब्दप्रामाण्योच्छेदप्रसङ्गा-दिति भावः।

ननु किमिदं साधुत्वं यदपभ्रंशेषु नास्ति। न च व्याकरणनिष्पा-द्यत्वं, वा नव्यनैयायिकोक्तं तत्। अनुकरणे शब्दमात्रस्य व्याकरणनि-

(१) 'न तथाऽन्दोलिकादण्डो' इति पाठः साधुः।

ष्पाद्यादित्वेन सर्वत्र साधुत्वापत्तौ साध्वसाधुविभागोच्छेदापत्तेः । न च यः शब्दो यत्रार्थे व्याकरणव्युत्पन्नः स तत्र साधुः, तद्व्युत्पन्नत्वग्रहश्च क्वचित्स्पष्टोपलभ्यमानव्याकरणात् क्वचिच्छिष्टप्रयोगकोशादिभिरनुमानात् तस्य च बाहुलकादिना सङ्ग्रहः । यथा पुष्पवन्तपदं साहित्यावच्छिन्नोभयविषयकार्थबोधे एव साधु, नैकतरार्थमात्रबोधे । यथा वा दारशब्दो बहुवचनान्त एव साधुर्नान्यवचनान्तो, यथा वा वच्धातुः तिप्तस्परः साधु र्नान्तिपर इति वाच्यम् । लाक्षणिकानां तत्तदर्थे व्युत्पादनविरहेण तेषां तत्र साधुत्वानापत्तेः । एतेन शक्तत्वमेव साधुत्वमित्यप्यपास्तम् । तत्त्वाज्ञानेऽपि साधुत्वव्यवहाराच्चापभ्रंशेष्वतिव्याप्तेश्चापरमतेसमासादौ प्रकृतिप्रत्ययसमुदाये च शक्त्यभावेन तस्यासाधुतापत्तेश्च। प्रत्येकशक्तिमादाय साधुत्वे च 'बाधते'इत्यादिवद् 'बाधति'इत्यादेरपि साधुतापत्तेश्च, द्योतकेष्वव्याप्तेश्च। न चौपसन्दानिकीशक्तिरेव द्योतनेति चेन्न । उपसन्धीयत इत्युपसन्दानं समभिव्याहृतपदं तद्वृत्तिशक्त्युद्बोधकत्वमिति तदर्थसत्त्वेन तेषु शक्त्यभावात् । एतेन वृत्तिमत्त्वं तदित्यपि परास्तम् ।

न च जातिविशेषः तत् । कत्वादिनां साङ्कर्यापत्तेरत आह-साधुत्वं चेति । चस्त्वर्थे । तत्रादौ तज्ज्ञापकमाह-व्याकेति । एतस्य नित्यत्वादाह-व्यङ्ग्य इति । अन्येषामज्ञानाय अस्वाश्वशब्दादेः क्रमेण वाजिदरिद्रादौ साधुत्ववारणायाश्रयमाह-अर्थविशिष्टेति । तत्सिद्धौ मानमाह-पुण्येति । अनेन तस्य पुण्यजनने एवोपयोग इति सूचितम् । एतेन तज्ज्ञाने शाब्दबोधहेतुतायास्तदभावनिश्चये तत्प्रतिबन्धकतायाा वा प्राङ्निरासादीदृशसाधुत्वस्य क्वोपयोग इत्यपास्तम् । ननु तेन पुण्यजनने एव किं मानमत आह तदुक्तमिति । तस्य पुण्यजनकत्वं प्रागुक्तसत्त्वमित्यर्थः । भाष्ये इत्यस्य पठितया श्रुत्येति शेषः । तामेवाह-एक इति । तादृश एकोऽपि तत्र कामधुग् भवति किमु सर्वे इत्यर्थः । पौनरुक्त्यभ्रमनिरासायाऽऽह-सम्यगिति । अनेन मध्यमलाभः । शास्त्रेत्यनेनाऽऽद्यलाभः । अन्विति । ज्ञात इत्यर्थः सुप्रेत्यनेन पुण्यापकर्षकाङ्गवैगुण्यनिरासः सर्वेत्यनेनान्त्यलाभः । व्याकेति प्राचामनुरोधेनोक्तम् । वस्तुस्तदुपलक्षणं तत्रेत्याह-तस्येति । साधुत्वस्येत्यर्थः । तत्र मुख्यत्वादादावाह-शिष्टेति । आदिना निरुक्तादिः । एतेनाभ्युदययोग्यत्वं

व्याक्रियाजननीयत्वमिति लक्षणद्वयमिति प्राचीनोक्तमपास्तं । न्यूनतापत्तेश्च ।

लाक्षणिकेष्वपि शक्यार्थमादायैव पदस्य साधुत्वं, पदान्तरसम्बन्धेऽन्वयाद्यनुपपत्त्या शक्यतावच्छेदकारोपेणैव लक्ष्यार्थबोधात् । 'गोपी' इत्यादौ प्रक्रियादशायां 'गोप'इति प्रातिपदिकस्य गोपत्वारोपेण तत्स्त्रीबोधकत्वानुमानं "पुंयोगादाख्यायाम्" अष्टा० सू० ४–१–४९) इति शास्त्रतः ।

लिङ्गं लिङ्गपरिज्ञाने सूत्रं प्रत्ययशासकम् ।
सोऽयमित्यभिसम्बन्धात्पुंशब्दे स्त्र्यभिधायिता ॥

इति हर्युक्तेः । अत एव 'यदिह परिनिष्ठितं तत् साधु' इत्यर्थापत्तिलभ्यवाक्यात्साधुत्वबोधकं व्याकरणमिति भाष्यं सङ्गच्छते । तद्बोधकं च व्याकरणमद्य त्वे पाणिनीयमेवेत्यपि भाष्ये स्पष्टम् । एवञ्च पाणिनीय व्याकरणव्युत्पत्तिज्ञानपूर्वकं साधुत्वेन ज्ञातसाधुशब्दप्रयोगाद्धर्म इति बोध्यम् । अत एव "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" इति भाष्ये उक्तम् ।

वाचकत्वाविशेषेऽपि नियमः पुण्यपापयोः ।

इति हरिणाप्युक्तम् ॥

( कुञ्जिकाटीका । )

ननु अश्वशब्दो वाजिनि साधुरित्येव साधुताया अर्थविशेषनियन्त्रितत्वात्तीरादौ गंगादिपदस्य साधुत्वानापत्तिरत आह–लाक्षणिकेष्वपीति । ननु कथं तीरबोध इत्यत आह–पदान्तर इति । तत्र तीरे प्रवाहत्वमेवारोप्यते, अन्यथा शब्दार्थसम्बन्धस्यानित्यत्वापत्तिरिति भावः । एवञ्च प्रवाहत्वप्रकारकप्रतीतिविशेष्यप्रसिद्धार्थत्वं मुख्यत्वं तादृशाप्रसिद्धार्थत्वं च गौणत्वं बोध्यम् । ननु गोपी-

लननिमित्तस्य गोपशब्दस्य स्त्रियां वृत्त्यभावादारोपितगोपत्ववत्याश्च ङीषः प्रागुपस्थापकाभावात्कथं तदनुशासनमत आह-गोपीत्यादाविति । या हि स्वयं गाः पालयति तत्र 'गोपा' इत्येव भवति । पालनक्रियारहितायां गोपभार्यायां तद्धर्मलाभात गोपशब्दः प्रयुज्यते । एतेन पुंयोगे अजीति वदन्तः परास्ताः । तत्र जातेरेव निमित्तत्वेन तद्धर्मलाभस्य निमित्तत्वं नास्तीति पुंयोगासम्भवात् । ननु पूर्वं स्त्रीबोधाभावात्कथं ङीषः प्राप्तिरत आह-प्रक्रियेति । तत्स्त्रियां गोपत्वारोपेण ङीषो निमित्तं स्त्रीबोधकत्वं प्रक्रियादशायामानुमानिकमित्यर्थः । ननु तीरादिपदवदत्र तात्पर्यग्राहकाभावादाक्षेपे किं बीजमत आह-इति शास्त्रत इति ।

पुंयोगादिति शास्त्रात्स्त्रीत्वबोध इति यदुक्तं तत्र मानमाह-लिङ्गमिति । प्रत्ययशासकं पुंयोगादिति सूत्रं स्त्रीलिङ्गज्ञाने लिङ्गमनुमापकमित्यर्थः । अत्रेदं तत्त्वं—गोपालनरहितायां गोप्यां गोपशब्दस्य वृत्तौ दम्पतिभावसम्बन्ध एव निमित्तम् । यथा हि 'गङ्गायां घोषः' इत्यत्र सामीप्यसम्बन्धात्तीरे वृत्तिः, 'मञ्चाः क्रोशन्ति' इत्यत्र संयोग एव सम्बन्धः, 'आयुर्घृतम्' इत्यत्र जनकत्वं, तथा 'देवकी' इत्यादौ जन्यजनकभावसम्बन्धेनैव दुहितरि वृत्तिः । निरूढश्चायं व्यवहार इति न सम्बन्धान्तरमादायातिप्रसङ्ग आपाद्यः । इत्थमेव जगदीशीत्यादयः प्रयोगाः । एवञ्च देवदत्तादिशब्दानां स्वत एव स्त्रियां वृत्तिसम्भवेन पुंयोगाभावाट्टाबेव । जात्यन्तरीयायां शूद्रभार्यायां शूद्रशब्दस्य प्रवृत्ता तु शूद्रसम्बन्ध एव निमित्तमिति । पुंशब्दे पुंवाचके गोपशब्दे प्रक्रियादशायां बोधकत्वमानुमानिकमेवेत्यत्र मानमाह-अत एवेति । अयम्भावः । यदि तिबादिविधावेव व्याकरणस्य तात्पर्यं तदा साध्वनुशासनत्वभङ्गः, अतः साधुत्वविशिष्टास्तिबादयो विधीयन्ते । ननु लडादीनां प्रयोगाभावात्कथं साधुत्वविशिष्टस्य विधानमिति चेत्? एवं तर्हि "वर्तमाने लट् भवति, तेन च यत् परिनिष्ठितं तत्साधु" इत्यर्थ इति । अर्थापत्तीति । अर्थस्य उपपादकस्य आपत्तिः कल्पना यथा 'पीनो देवदत्त' इत्यत्र पीनत्वान्यथानुपपत्त्या रात्रिभोजनं कल्प्यते ॥

( कलाटीका )

नन्वेवं यः शब्दो यत्रार्थे शास्त्रेण व्युत्पादित इति प्रागुक्तमेव समायातमिति लाक्षणिकाव्याप्तिरेवात आह–लाक्षणीति। शक्यसम्बन्धित्वेन गृहीतार्थबोधस्यैव लक्षणाजन्यत्वेन शक्यार्थबाधज्ञानस्य लक्षणाजन्यबोधे कारणत्वेन च लक्षणास्थले प्रथमं शक्यार्थबोधस्याऽऽवश्यकतया तमर्थमादायैव साधुत्वोपपत्तिः। अत एव गङ्गयाव्यवहितसमीपघोषविषये प्रयोगे 'गङ्गायां घोष' इत्यादौ गङ्गापदस्य तीरपरत्वे ऽपि स्त्रीप्रत्ययादिसङ्गतिः। पदस्य पदान्तरसम्बन्धे एव श्रोतृबोधे लाक्षणिकार्थप्रतिसन्धानेन प्रागुपस्थिततीरगाम्भीर्यरूपान्तरङ्गार्थमादायैव शास्त्रप्रवृत्त्या अन्तरंगत्वात् स्त्रीत्वादिप्रयुक्तकार्यप्रवृत्ते गंगयाऽत्यन्तसमीपघोषविषये तु प्रयोगे 'गङ्गायां घोष' इत्यादौ सप्तम्या औपचारिकाधारे ऽपि साधुत्वबोधनं साधकतममिति तमप्ग्रहणेनेति भावः। तदाह–पदस्येति। पदान्तरेति च। आदिना तात्पर्यानुपपत्तिपरिग्रहः। मुख्यसिद्धान्तमतेनाह–शक्येति। इयमेव लक्षेणत्यग्रे स्फुटीभविष्यति। एतेन शिष्टप्रयोगादिभिस्तत्तदर्थेऽपि तेषां व्याकरणव्युत्पाद्यत्वानुमानेनादोष इति प्राचोक्तमपास्तम्। नन्वेवं कथं गोपीत्यादौ लक्षणा, तत्रोक्तबीजाभावात, कथञ्च तत्र लक्ष्यार्थे साधुत्वं चोक्तनियमत्याग इत्यत आह–गोपीत्यादाविति। शास्त्रबलात् सर्वत्र सर्वमिति भावः। लोके पदस्य लक्षणायां लिङ्गत्यागे ऽपि तस्य प्रायिकत्वं ध्वनयन्प्रातिपदिकलक्षणादौ यत्र शास्त्रं तात्पर्यग्राहकं तत्र स्वलिङ्गत्याग एवेत्याह–प्राक्रियेति।

शास्त्रस्य तदनुमापकत्वे मानं तात्पर्यान्तरानिरासायाह—लिङ्गमिति। लिङ्गत्यत्राऽर्शआद्यच्। स्त्रीत्ववदर्थबोधने स्त्रीप्रत्ययविधायकं पुंयोगादितिसूत्रमनुमापकमित्यर्थः। प्रत्ययेनि। स्त्रीप्रत्ययेत्यर्थः। लक्षणाबीजानां बहूनां तत्रोक्तत्वादाह–सो ऽयमिति। अनेन दांपत्यरूप एव तत्र पुंयोग इति सूचितं। भाष्यस्वरसोऽप्ययमेवेत्यन्यत्र स्पष्टम्। नन्ववमपि पुण्यजनकतावच्छेदकं तत्तदर्थे तत्तच्छब्दस्य व्याकरणव्युत्पाद्यत्वरूपमेव साधुत्वमास्तां कृतं जातिविशेषाङ्गीकारेण, इदमेवाभ्युदययोग्यतापदेनोच्यते अत आह—अत एवेति। तादृशजातिविशेषाङ्गीकारादेवेत्यर्थः। न हि व्याकरणव्युत्पाद्यत्वस्य साधुत्वे इदं सङ्गच्छेत। तस्य शास्त्रबोध्यत्वासम्भवादिति भावः।

वाक्यादित्यनेन सूत्रे तु कथमपि न तद्बोधकतावच्छेदकमित्यन्यत्र स्पष्टमिति सूचितम् । प्रसङ्गादाह—तद्बोधकं चेति । अद्यत्व इति निपात इदानीमित्यर्थे ।

फलितमाह—एवञ्चेति । तस्य पुण्यजनकत्वमत एव साध्व-नुशासनत्वान्यथानुपपत्त्या तथा वाक्यकल्पनत्वे चेत्यर्थः । पूर्वकमिति ज्ञानक्रियाविशेषणम् । यद्यप्युक्तश्रुतौ ज्ञानप्रयोगयोरुपादानं भाष्ये ऽपि मतद्वयमुक्तं तथापि ज्ञानाद्धर्म इति मतं न युक्तमित्यन्यत्र स्प-ष्टम् । अत एव प्रयोगस्य तदव्यवहितपाठस्तस्य व्यवहितपाठस्त-दाह–ज्ञातसाधुशब्दप्रयोगादिति । अन्यथा शास्त्रेण साधुत्वबोधनस्य वैयर्थ्यं स्पष्टमेवेति भावः । उक्तार्थे भाष्यसंमतिमप्याह–अत एवेति । अपभ्रंशेषु शक्तिसत्वादेवेत्यर्थः (उक्तमभिप्रेत्यैवेत्यर्थः) । अस्याग्रेऽप्य-न्वयः । शब्दैश्चेत्यादि पूर्वान्वयि । अन्यथासमानत्वोक्त्यसंगतिः स्प-ष्टैव । तद्भाष्यस्थहारिमप्याह–वाचकत्वेति । शब्दापशब्दैरिति शेषः । एतेन विशेषचेति भूषणादिधृतपाठः प्रत्युक्तः । भाष्यविरोधात् । अत एव 'साधूनेव प्रयुञ्जीते'ति विधि'र्नासाधू'निति निषेधश्च सफल इति भावः ॥

किञ्च अपभ्रंशे शक्त्यंशे कदाऽपि कस्याऽपि व्यव-हर्तुर्बाधादर्शनेन न तत्र शक्तिग्रहस्य भ्रमत्वम् । असति बाधके प्रमात्वस्यैव न्याय्यत्वात् । किञ्चैवमृषीणामा-र्षज्ञानेन (१)तदभावनिश्चयात् तेषां भ्रमासम्भवेन ततो बोधानापत्तिः । किञ्च प्रमाणानां सम्बद्धार्थबोध-कत्वेन तेषामपि अर्थेन सम्बन्ध आवश्यकः । अत एव 'गौः' इत्यस्य शब्दस्यार्थे बहवो गावी, गोणी, गोता, गोपोतलिका, इत्यादयोऽपभ्रंशा वर्तन्ते' इत्यर्थकं "गौरि-त्यस्य शब्दस्य गाव्यादयोऽपभ्रंशाः" इति भाष्यं साम-ञ्जस्येन सङ्गच्छते । अत एव धर्मार्थत्वं साधूनामुक्तं भाष्ये । एतेन "अर्थाय ह्येते उच्चन्ते शब्दा, न धर्मा-

(१) शक्त्यभावनिश्चयादित्यर्थः ।

य" इति शबरस्वाम्युक्तमपास्तम् ।

जैमिनिसूत्रस्याप्ययमर्थः, अपभ्रंशा अपि साधवः, तेऽपि हि साधयन्त्यर्थमिति पूर्वपक्षे, अन्यायो(१)ऽनेकसाधुशब्दत्वमिति। केचिदेव साधवो न सर्वे इति मनसि निधाय तर्हि साधौ प्रयोक्तव्ये असाधूचारणं कथमित्याशंक्य "शब्दे प्रयत्ननिष्पत्तेरपराधस्य भागित्वम्" ( जै०सू०१-३--२५ ) इति सूत्रेण प्रयत्नसाध्ये कार्ये प्रमादस्य दर्शनात्, यथा "शुष्के पतिष्यामीति कर्दमे पतति, 'तथा साधौ प्रयोक्तव्ये ऽसाधोः प्रयोग" इत्युक्तम् ।(२)

( कुञ्जिकाटीका )

किञ्चेति । शुक्तौ रजतमिदं नेति बाधनिश्चयानन्तरं पूर्वज्ञानस्य भ्रमत्वं कल्प्यते । अपभ्रंशनिष्ठशक्त्यंशे तु कस्यापि बाधादर्शनान्न भ्रमत्वसम्भव इत्यर्थः । तदभावनिश्चयादिति । ऋषीणां भ्रमाभावेन शक्त्यभावनिश्चयादित्यर्थः। प्रमाणानाम्—ज्ञायमानशब्दानाम् । तेषामपि—अपभ्रंशानामपि । अत एव । अपभ्रंशानामप्यर्थसबन्धसत्त्वादेव । धर्मार्थत्वमिति । न तु बोधकत्वमुक्तमित्यर्थः । अर्थाय ह्येते इति । एते शब्दा अर्थबोधाय उच्यन्ते इत्यर्थः । जैमिनिसूत्रस्यापीति । तत्र हि "प्रयोगोत्पत्त्यशास्त्रत्वाच्छब्देषु न व्यवस्था स्याद्" इति पूर्वपक्षसूत्रं । प्रयोगनियमस्य अशास्त्रत्वात् मूलभूतश्रुतिरहितत्वात्साधुषु प्रयोगनियमो न स्यादित्यर्थः । सिद्धान्तसूत्रमाह—अन्यायो ऽनेकेति । शब्दे इति । प्रयोक्तव्ये इति शेषः । प्रयत्ननिष्पत्तेरपराधः, प्रयत्नान्तरस्योत्पत्तिः प्रयोगे इत्युक्तम् ॥

(१) 'अन्यायश्चानेक शब्दत्वम्' १।३।९ इति जैमिनिसूत्रानुपूर्वी बोद्धव्या ।

(२) "महता प्रयत्नेन शब्दमुच्चारयन्ति—वायुर्नाभेरुत्थितः, कण्ठे विवर्तितः, मूर्धानमाहत्य परावृत्तः, वक्त्रे विचरन् विविधान् शब्दानभिव्यनक्ति । तत्रापराध्येताऽप्युच्चारयिता । यथा शुष्के पतिष्यामीति कर्दमे पतति, सकृद् उपस्प्रक्ष्यामि इति द्विरुपस्पृशति । ततोऽपराधात् प्रवृत्ता गाव्यादयो भवेयुः, न नियोगत." । इति तत्र भाष्यम् ।

( कलाटीका )

समानायामित्यादिभाष्यादिप्रसङ्गात्सिंहावलोकनन्यायेन पुनरप्यपभ्रंशेषु शक्तिमन्यथा साधयति । किञ्चेत्यादिना । कदापीत्यनेन त्रैकालिकबाधाभाव उक्तः । कस्यापीत्यनेन सर्वदेशीयतदभाव उक्तः । दोषान्तरमाह—किञ्चेति । एवं भ्रमात् बोधोपपत्त्या तत्र शक्त्यनङ्गीकारे । आर्षेति । दिव्येत्यर्थः । निश्चये हेतुरयम् । तदभावे शक्त्यभावे इत्यर्थः । तस्य तत्र प्रतिबन्धकत्वादाह—तेषामिति । ऋषीणामित्यर्थः । ततो ऽपभ्रंशेभ्यस्तेषामेवेति भावः दोषान्तरमाहा—किञ्च प्रमेति । पूर्वमाप्तत्वस्य शब्दप्रमाणत्वस्य च तुल्यत्वस्योक्तत्वादिति भावः । अत एवास्यात्रैव लेखो न प्राक् । बोधकत्वेन । अन्यत्र तथादृष्टत्वात् । तेषामपि—अपभ्रंशानामपि । अर्थेनेत्यादि जातावेकवचनम् । पुनरपि तत्र तां द्रढयति-अत एवेति । अत्र शक्तिसम्बन्धसत्त्वादेवेत्यर्थः । अन्यथा तयोर्मिथो ऽसम्बन्धात् तस्यार्थस्य शक्तिभ्रमाद्बोधका इत्येव सम्बन्धकल्पने वाचकतया च सम्बन्धार्थषष्ठीघटितादिमद्भाष्यासङ्गतिरेवेति भावः । नन्वसाधोः साधुप्रकृतिकत्वेन तत्संबन्धेनैव तत्सङ्गतिरत आह-अत एवेति । तेषां वाचकत्वादेवेत्यर्थः । अन्यथाऽर्थबोधरूपदृष्टप्रयुक्तवैषम्यस्य संभवेनाऽदृष्टपर्यंतगमनासङ्गतिः स्पष्टैव । यदर्थमिदं पुनरुक्तं तदाह—एतेनेति । उक्तभाष्यविरोधेनेत्यर्थः । एते साधवः ।

नन्वेवमपि तदशक्तिरिति प्रागुक्तजैमिनिसूत्रविरोध एवात आह-जैमिनीति । अयम् । वक्ष्यमाणः । नतु तद्भाष्यकृत्संमतः प्रागुक्तः । तदर्थमेव तत्रादावुपक्रम(?)मर्थेऽत आह-अपीति । साधेति । बोधयन्तीत्यर्थः । अर्थबोधकत्वमेव साधुत्वमिति तद्भावः । अत्र सिद्धान्तसूत्रमाह-अन्येति । इति अनेन सूत्रेणोक्तमिति शेषः । तात्पर्यार्थमाह-केचिदिति । अनेके च ते साधुशब्दाश्च तेषां भावस्तत्त्वमिति सूत्रार्थे इति भावः । अस्यानुक्तत्वादाह—मनसीति । अन्यथा पूर्वोत्तरग्रन्थासङ्गतिरेवेति भावः । तर्हि केषांचिदेव साधुत्वे तेषां मते शब्दस्य जन्यत्वमित्याह-शब्दे इति तद्विषये इत्यर्थः । हेतुलब्धमाह-प्रयत्नेति । भागित्वमित्यस्य दृश्यत्वमित्यर्थस्तदाह—दर्शनादिति । तथा च प्रमादादसाधूच्चारणमिति भावः ॥

किञ्च एकस्यार्थस्यानेकसाधुशब्दत्वमन्याय्यं तस्मादेकोऽनादिरन्येऽपभ्रंशाः, हस्तः करः पाणिरित्यादयोऽभियुक्तोपदेशात्सर्वे साधव इत्युक्त्वा तत्राभियुक्तोपदिष्टः साधुरित्युक्तम्। तत्रेदमाशङ्क्येत गौरिति प्रयोक्तव्ये गाव्यादीनामिव गगर्यादीनामपि प्रमादात्प्रयोगः कुतो नेति चेत्? तत्रेदं सूत्रं "तदशक्तिश्चानुरूपत्वात्" (जै०सू०१-३-२८) इति। तेषामेवाशक्त्योच्चारणमनुरूपत्वात्, अर्थतोऽवगवतश्चानुरूपत्वादिति तदर्थः। तत्रार्थतश्चानुरूप्याग्रहणे गोपादिशब्दानामप्युच्चारणं प्रसज्येत। एकदेशानुरूप्याच्च विभक्तिव्यत्यये ऽपि 'अश्मकैरागच्छामि' इति प्रयोगाद् 'अश्मकेभ्य' इत्यर्थावगतिर्भवति। तत्र यद्ययं तदर्थे लौकिकः प्रयोगस्तदा न साधुः, वेदे तु साधुरित्यन्यत्। एवञ्च पतञ्जलिनैकवाक्यता भवति।

(कुञ्जिकाटीका)

गगर्यादीनामपीति। गोशब्दापभ्रंशतयेत्यर्थः। गोपादिशब्दानामिति। गोशब्दापभ्रंशतयेत्यर्थः। वेदे तु साधुरिति। विभक्तिव्यत्ययादिति भावः। पतञ्जलिनेति। "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च' इति वार्तिकं व्याचक्षाणेनेत्यर्थः॥

(कलाटीका)

पूर्वसूत्रस्य नोक्तार्थो यः शंककेन मनसि निहितः, किन्त्वन्य एवेत्याह–किञ्चेति। अनेकेति बहुव्रीहिः। एकोऽर्थोऽन्यपदार्थ इति भावः। अनपभ्रष्टत्वमनादित्वं वा साधुत्वमित्याशयेनाह–अनादिरन्येऽपभ्रंशा इति। नन्वेवं पर्यायवाचकानामप्यसाधुत्वं स्यादत आह–हस्त इति। अभियुक्ताः। कोशकृतः। पर्यवसितमाह–तत्रेति। अर्थे इत्यर्थः। तेषां मध्ये इति वा। एवञ्चापभ्रंशानां वाचकत्वेन तदर्थबोधाय प्रयोगेऽपि प्रथमसिद्धान्ते इत्यर्थः। अस्याः शंकायास्तत्रासत्वादाह–आशङ्क्येतेति।

केनचिदितिशेषः। इदमर्थमाह–गौरिति। किञ्चिदवयवसादृश्यस्य तत्रापि सत्त्वादिति भावः। चेदित्यपपाठः। तत्रेदमिति। तच्छंकानिवारणनिमित्तमित्यर्थः। न साधुत्वमिति भावः।

एवमुपक्रममुक्त्वा सर्वं वा प्रकृतमाह–तत्रेदमिति। तत्रेदमितितदनुक्तत्सूत्र संगतिपूर्वं तत्र शङ्कायामुत्तरभूतमिति भावः। अत एव तन्न्यायादिनाह–तेषामेवेति। गाव्यादीनामेवेत्यर्थः। लक्षणयाह–उच्चारणमिति। यद्यप्यर्थत इत्येव प्रकृतेष्टसिद्धिस्तथापि विनिगमनाविरहात्पद्मन्नित्यादाविवाह–अर्थत इति। पदजन्यप्रतीतिविशेष्यतेत्यर्थः। एवेति। शब्दविशिष्टार्थयोरेकदेशत इत्यर्थः। तदर्थः। सूत्रस्य शाब्दोऽर्थः। पूर्वमयमर्थ इत्यस्य तात्पर्यार्थं इत्यर्थः इत्यपौनरुक्त्यं बोध्यम्। तत्राद्यस्य फलमाह—तत्रेति। तयोर्मध्ये इत्यर्थः। अवयवतस्तत्त्वस्य तत्र सत्त्वादिति भावः। आदिना गगर्यादिग्रहणम्। अपिना गाव्यादिसमुच्चयः। नन्वेवं तावदेवास्तु किमर्थं द्वितीयनिवेशोऽत आह–एकेति। द्वितीयसाम्यं न सर्वावयवतः। तथाहि सति तत्त्वमेव, न सादृश्यमितिभावः।

चस्त्वर्थे। अत्र विभक्त्यंशे एवाशक्त्याऽन्यथोच्चारणं तत्र यदि इदं नोच्यते तदा पदजन्यप्रतीतिविशेष्यस्यार्थपदेन ग्रहणात्तस्य चात्र भेदात् तदभावात् तथोच्चारणाभावात् तदपभ्रंशाभावेन ततस्तदर्थावगतिर्न स्यात्। एतदुक्तौ एतद्भेदे ऽपि अवयवतस्तत्सत्त्वात् मल्लग्रामादिवद् भूयसा व्यवहाराद्विशिष्टैकदेशसाम्यसत्त्वाच्चास्यैव प्राबल्यमिति ततस्तत्सिद्धिः। अवयवैकदेशशब्दाभ्यां चोभयोरप्येकदेशयोर्ग्रहणम् अत एव सामान्येन तथोक्तमन्यथा शब्दतश्चेत्येव ब्रूयात्, एवंचातिव्याप्तिवारकं तत्, अव्याप्ति वारकमिदं। तथाचानयोः प्रत्येकं तद्धेतुत्वमसम्भवे तु समुदितयोरतएव 'च' उक्त इति भावः। प्रयोगात्–अशक्तिजात। अवगतीति पाठः स चार्थसमासौ। विशेषमाह–तत्रेति। द्वितीयनिवेशे सतीत्यर्थः। न साधुरिति। समाने ऽर्थे शास्त्रान्वितो ऽशास्त्रान्वितस्य निवर्तक इति ऋलृक्सूत्रभाष्योक्तेः। वेदे त्विति। तत्र सर्वेषां व्यत्ययसत्त्वात्। तत्सूत्रार्थवर्णनफलमाह–एवं चेति। तेनापि वाचकत्वस्य तत्र तस्यासाधुत्वस्य चाङ्गीकारे चेत्यर्थः। सम्भवत्येकवाक्यत्व इति न्यायात्॥

नन्वपभ्रंशानां शक्तत्वेऽर्थवत्त्वादर्थवत्सूत्रेण प्रातिपदिकसंज्ञाप्राप्तिरिति चेद्, इष्टापत्तेः। अत एव पस्पशाया"मेवं हि श्रूयते—यर्वाणस्तर्वाणो नाम ऋषयो बभूवुः ते तत्रभवन्तो यद्वानस्तद्वान इति प्रयोक्तव्ये यर्वाणस्तर्वाण इति प्रयुञ्जते, याज्ञे कर्मणि पुनर्नापभाषन्ते" इति भाष्ये उक्तम्। यर्वाणस्तर्वाण इति णान्ताज्जसि यर्वाणस्तर्वाणो नामेति प्रयुक्तम्। अत एव रुत्वोत्वादि, बभूवुरित्यनेन सामानाधिकरण्यञ्च। प्रकृतिप्रत्यययोरुभयोरपि शास्त्रविषयत्वे एव साधुत्वं, न त्वन्यतरस्य। 'गगरी' इत्यादि च घट इति स्वन्तस्यैवापभ्रंश इति न ततः सुः। गगरीमित्यादि प्रयुञ्जते चेति केचित्।

परे तु "साध्वनुशासनेऽत्र शास्त्रे" इति भाष्योक्तेः अर्थवत्त्वेन साधूनामेव संज्ञाविधावुद्देश्यत्वमिति नासाधुषु प्रातिपदिकसंज्ञा। यर्वाणस्तर्वाण इत्यादौ सुबप्यसाधुरेव। अत एव "परश्च" (अष्टा०सू० ३-१-२-) इति सूत्रे भाष्ये "किमस्य ज्ञयसामित्यसाधुर्वृत्तिजसादृश्येऽप्यवृत्तिजत्वात्" इत्युक्तम्। प्रकृत्युद्देशेनैव प्रत्ययानां विधानात्केवलानामेषामसाधुत्वं बोध्यते। तत्र वृत्तिजसदृशत्वात्कश्चित्साधुरिति भ्राम्येत इति प्रत्ययः परश्चेति नियमेनास्याप्यसाधुत्वमुक्तं भाष्ये। अर्थतः शब्दतश्च प्रत्ययजातीयः स पर एवेत्यर्थेनास्यासाधुत्वं बोध्यते। एवञ्च शास्त्रविहितत्वाभावादमीष्वसाधुत्वमित्युक्तप्रायम्। अस्वे अश्वशब्दस्यासाधुत्वमुक्तमन्यत्र। अत एव

"प्रकृतिपर एव प्रत्ययः, प्रत्ययपरैव च प्रकृतिः" इति नियमाकारो दर्शितो भाष्ये। साधूनामेव प्रत्ययाविधावुद्देश्यत्वेन प्रकृतित्वम्। खण्डसाधुत्वबोधनद्वारा समुदायसाधुत्वबोधकं व्याकरणमर्थवत्त्वबोधनवत्। एवञ्च भाषानुसारेण क्रियमाणनामोत्तरं विभक्तिरप्यसाधुरित्याहुः।

( कुञ्जिकाटीका )

यर्वाण इति। तन्नामान इत्यर्थः। ननु गगरीशब्दादिभ्योऽपि सोरुत्पत्त्यापत्तिरत आह—प्रकृतिप्रत्यययोरिति। शास्त्रविषयत्वे इति। शास्त्रीयोद्देश्यतावच्छेदकवत्त्वे इत्यर्थः। घट इतिपदस्यैवेति। तथा चार्थबोधकत्वसत्त्वेऽपि एकत्वविशिष्टार्थस्य प्रकृत्यैव क्रोडीकाराच्च ततः सुरिति भावः। असाधुरेवेति। श्रुतौ तु असाध्वनुकरणस्यापि साधुत्वान्न दोष इति भावः। अर्थवत्त्वेनेति। साधव एवार्थवन्तः प्रातिपदिकसंज्ञाविषया इत्यर्थः। अत एवेति। यतोऽनुशिष्टप्रकृतेः प्रयुज्यमान एव प्रत्ययः साधुरत एवेत्यर्थः। वृत्तिजसादृश्येऽपीति। एवञ्च यद्यपि केवलानामेषां साधुत्वं न प्राप्तं तथापि न केवलः प्रत्यय इत्यस्य प्रत्ययजातीय इत्यर्थ इति भावः। नियमेनेति। ङ्याप्प्रातिपदिकादिति पञ्चमीनिर्देशादेव प्रत्ययानां परत्वे सिद्धेऽपीत्यादिः। अस्वे-दरिद्रे। तद्बोधकम्। साधुत्वबोधकम्। धर्मनियमः। धर्मार्थो नियमः। 'असाधुरनुमानेन वाचकः कैश्चिदिष्यते' इति पूर्वार्धेनापभ्रंशानामवाचकत्वमभिधाय हरिर्मतान्तरमाह—वाचकत्वाविशेषे ऽपीति। अस्तु वा अपभ्रंशादप्यर्थावगमः, शास्त्रेण तु पुण्यपापनियमः क्रियते साधुभिरेवार्थो वक्तव्यो नासाधुभिरेवं हि क्रियमाणमभ्युदयकारि भवतीति॥

( कलाटीका )

पतञ्जलिना। ऋलृक्सूत्रस्थेन। वृत्त्यार्थबोधजनकत्वमर्थवत्त्वं तत्सूत्रे निविष्टमित्याह—नन्वपेति। एकदेशिमतमाह—इष्टापत्तेरित्यादि केचिदित्यन्तेन। अत एव-प्रतिपदिकत्वसत्त्वादेव। पस्प-

शायामित्यस्य भाष्ये उक्तमित्यत्रान्वयः (१)। तद्ग्रन्थमाह-एवं हीति। बभूवुरित्यग्रे प्रत्यक्षधर्माणः परावरज्ञाः। विदितवेदितव्या अधिगतयाथातथ्या इति मध्येभाष्ये ऽस्ति, तथापि प्रकृतानुपयोगात्तस्य त्यागः। ते-ये उक्तलक्षणास्ते। अत एव तत्रभवन्तः पूज्याः प्रयुञ्जते प्रयुक्तवन्तो यतस्ते एतादृशास्ततो लौकिकेष्वर्थेष्वतिवैराग्येणाग्रहाभावात्। यद्वाऽस्तु, नः किं प्रयोजनं? तद्वास्तु वः किं प्रयोजनम्? इत्यर्थे तथा प्रयोक्तव्ये यथा तथा प्रयुक्तवन्तः इत्यर्थः। याज्ञे कर्मणि तु साधूनेव प्रयुक्तवन्तस्तदाह-यज्ञे इति। पुनस्त्वर्थे। उभयत्र वर्तमानसामीप्ये इति भूते लट्। अत एवेत्यस्यार्थं सूचयन् तदाशयमाह-तत्रेति। प्रातिपदिकस्थले इत्यर्थः। योग्यतयाऽऽह-णान्तादिति। णकारान्तादित्यर्थः। यतस्ते एवं प्रयुक्तवन्तोऽतस्ते यर्वाणस्तर्वाण इति तदपशब्दरूपबालककृतोपहासपरनामानः संपन्ना इति तदर्थः। इदं द्रढयति-अत एवेति। जसः सत्त्वादेवेत्यर्थः। नन्वेवं शास्त्रविषयतया साधुत्वापत्तिरिति भाष्यासङ्गतिरेवात आह-प्रकृतीति।

नन्वेवं रीत्या गगरीत्यादावपि सुबुत्पत्त्यापत्तिरत आह-गगरीति। असाधूनां साधुपदप्रकृतिकत्वादित्यर्थः। तथाच तेनैव तदर्थस्योक्तत्वात् न पुनः सुबिति भावः। नन्वेवमपि तस्य प्रथमोपस्थितत्वेनोक्तहेतोश्च तन्मात्रप्रकृतिकत्वेन कर्मत्वादेरनुक्तत्वादमादिः स्यादेवेति चेत्? इष्टापत्तिरित्याह-गगरीति। आदिना तृतीयादिपरिग्रहः केचिदिति सूचितामरुचिं प्रकटयन्सिद्धान्तमाह-परे त्वित्यादिना। संज्ञेति। प्रातिपदिकेत्यादिः। असाधुष्विति। सम्बन्धिनोऽधिकरणत्वविवक्षया सप्तमी। नन्वेवं कथं तत्र न साऽत आह-यर्वाण इति। इदं द्रढयति-अत एवेति। तस्याप्यसाधुत्वादेवेत्यर्थः। किमस्येति। अस्य किंप्रमाणमित्यर्थे ऽयं प्रयोगः। ननु शास्त्रस्य सत्त्वे किमित्यवृत्तित्वमत आह प्रकृतीति। तत्र प्रकृतेरभावादिति भावः। तत्र-उक्तप्रयोगे। अपिस्तस्यैव

(१) भाष्ये पस्पशासंज्ञकाह्निके उक्तमित्यर्थः। स्पश्यते स्पृश्यते उपोद्घाततया तावदुपगम्यते इति स्पशेः कर्मण्यङि बाहुलकाद्द्वित्वे रूपम्। इत्यधिकः पाठः पुस्तकान्तरे दृश्यते।

वस्तुतस्तु व्याकरणारम्भव्यतादिप्रतिपक्षान् स्पशते बाधनोतीति कर्तर्यचि बाहुलकाद्द्वित्वे टापि तद्रूपसिद्धिः

समुच्चायकः । अनतिप्रसङ्गाय नियमस्वरूपमाह-अर्थेत इति । एतदनुक्तावस्वधातोरपि पूर्वप्रयोगो न स्यादत इदमुक्तम् । द्वितीयानुक्तौ कर्मशब्दस्यापि पूर्वप्रयोगो नस्यादतस्तदुक्तम् अत एव प्रत्ययजातीय इत्युक्तं, न तु प्रत्यय इत्येव । ननु तद्भाष्यतो द्वयसचोऽसाधुत्वलाभेऽपि नसुप इति कथं तत्तत्र साधकमतआह-एवञ्चेति । प्रकृत्यभावरूपयुक्तिसाम्यमाह-शास्त्रेति । गगरीमित्यादावप्येवंबोध्यम् । एवं प्रत्ययांशेतत्वमुक्त्वा तस्यासाधुत्वे चेति अर्थविशेषान्तर्भावेणैव साधुत्वमवश्यं वाच्यमिति ध्वनयन्नर्थेत इत्यावश्यकमिति सूचयन्नाह-अस्वे इति । अन्यथा तस्य तत्रासाधुत्वं न स्यात् शब्दतस्तत्सारूप्यस्य सत्त्वात्सदृशयोरभेदादिति भावः अन्यत्र-कौस्तुभादौ । अत एवार्थविशिष्टशब्दनिष्ठ इति प्रागुक्तम् ।उभयोः शास्त्रविषयत्व एव साधुत्वं नान्यतरस्येत्यत्र मानमाह-अत एवेति।तस्य तत्रासाधुत्वादेवेत्यर्थः । आद्ये षष्ठीतत्पुरुषः । अग्रे पूर्व निपातप्रकरणानित्यत्वात् स आकारः न केवलेति न्यायभूतभूतः । ननु प्रकृतित्वं तत्रापीत्युक्तमयुक्तमत आह-साधूनामेवेति । उक्तभाष्यादितिभावः ननु वाक्यस्य पदस्य वा साधुत्वं व्याकरणबोध्यं, न तुप्रकृत्यादीनामिति कथं साधूनामेवेत्यत आह-खण्डेति । प्रकृत्यादेरित्यर्थः । निर्विवादत्वेन सर्वाभिमतदृष्टान्तमाह-अर्थेति । यथा तत्तदर्थबोधनद्वारा समुदायार्थबोधनं तथेति भावः । पूर्वमतासाङ्गत्यमेवेत्याह-एवञ्चेति । तेषामेव प्रकृतित्वे चेत्यर्थः ॥

ननु साधुत्वस्य जातित्वे कत्वादिना सङ्कर इति चेत् ? न, ययोर्जात्योः परस्परासामानाधिकरण्येनैव सिद्धिः परस्परमाश्रयभेदकता च लोकसिद्धा तयोः साङ्कर्यस्यैव दोषत्वात् । आश्रययोर्भेदभङ्ग एव हि साङ्कर्यदूषकताबीजम् । तादृशजात्योर्यत्र साङ्कर्यप्रसङ्गस्तत्रोभयवैलक्षण्यं स्वीकार्यं, यथा नृसिंहे, अश्वतरे वा । ययोस्तु सामानाधिकरण्येनैव सिद्धिः तयोः सामानाधिकरण्यस्य व्याप्यव्यापकभावापन्नजात्योः साङ्-

र्यस्यैवादोषत्वात् ।

एवञ्च "साङ्कर्यमुपाध्योरपि दोषाय यदि तत्रापि आश्रयभेदभङ्गप्रसङ्ग" इति स्पष्टं श्रीहर्षकृतखण्डने, न तु साङ्कर्यस्य सर्वथा जात्यभावकल्पकत्वं मानाभावात् । एवञ्च भूतत्वमूर्तत्वे पृथिवीत्वशरीरत्वे च जातिरूपे एव । क्रियासमवायिकारणताद्यवच्छेदकतया मूर्तत्वादेरिव भूतादिपदशक्यतावच्छेदकतया भूतत्वादेरपि जातित्वात् । न हि कारणतावच्छेदकतयैव जातिसिद्धिर्न शक्यतावच्छेदकतयेति राजाज्ञास्तीति दिक् ।

( कुञ्जिकाटीका )

सङ्कर इति । केवलसाधुत्वं साधुगकारे केवलकत्वमसाधुककारे साधुककारे उभयमित्यर्थः । ययोर्जात्योरिति । यथानरसिंहत्वाश्रय· नरत्वसिंहत्वयोरेकत्र समावेशान्नरसिंहत्वं भिन्नमित्यर्थः । भेदभङ्ग एवेति । नरत्वाश्रयोऽन्यः सिंहत्वाश्रयश्चान्य इत्येवं भेदस्यासिद्धिरेवेत्यर्थः । अत एव गुणगतजातौ साङ्कर्यं न दोषायेति न समाहितम् । अश्वतरे इति । तत्राश्वत्वगर्दभत्वयोः सङ्करः । ययोस्त्विति । पृथिवीत्वद्रव्यत्वयोः समावेशस्यादूषणत्वादिति भावः ।

स्पन्दसमवायिकारणतावच्छेदकतया मूर्तत्वं जातिः, तत्साङ्कर्याद्भूतत्वं न जातिः, भूतत्वस्योपाधित्वात्तत्साङ्कर्यं तु मूर्तत्वस्य जातित्वे न बाधकमिति तार्किकमतं निराकरोति—उपाध्योरपीति । इदं च प्राचीनखण्डनम् । दीधितिमते तु जन्यद्रव्यसमवायिकारणतावच्छेदकतया पृथिव्यादिचतुष्टयवृत्तिरेव भूतत्वं जातिः । आकाशे भूतपदव्यवहारस्तु बहिरिन्द्रियग्राह्यविशेषणगुणवत्त्वप्रयुक्तो भाक्तः । मानाभावादिति । स्वसामानाधिकरण्य स्वाभावसमानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनियमस्य भङ्गप्रसङ्ग इति तदुक्तिस्तु निर्युक्तिकेति भावः । शरीरत्वे चेति । केवलपृथिवीत्वं घटादौ, केवलशरीरत्वं तैजसादिशरीरे, अस्मदादिशरीरे चोभयमि·

र्यस्येवादोषत्वात् ।

एवञ्च "साङ्कर्यमुपाध्योरपि दोषाय यदि तत्रापि आश्रयभेदभङ्गप्रसङ्ग" इति स्पष्टं श्रीहर्षकृतखण्डने, न तु साङ्कर्यस्य सर्वथा जात्यभावकल्पकत्वं मानाभावात् । एवञ्च भूतत्वमूर्तत्वे पृथिवीत्वशरीरत्वे च जातिरूपे एव । क्रियासमवायिकारणताद्यवच्छेदकतया मूर्तत्वादेरिव भूतादिपदशक्यतावच्छेदकतया भूतत्वादेरपि जातित्वात् । न हि कारणतावच्छेदकतयैव जातिसिद्धिर्न शक्यतावच्छेदकतयेति राजाज्ञास्तीति दिक् ।

( कुञ्जिकाटीका )

सङ्कर इति । केवलसाधुत्वं साधुगकारे केवलकत्वमसाधुककारे साधुककारे उभयमित्यर्थः । ययोर्जात्योरिति । यथानरसिंहत्वाश्रयनरत्वसिंहत्वयोरेकत्र समावेशान्नरसिंहत्वं भिन्नमित्यर्थः । भेदभङ्ग एवेति । नरत्वाश्रयो ऽन्यः सिंहत्वाश्रयश्चान्य इत्येवं भेदस्यासिद्धिरेवेत्यर्थः । अत एव गुणगतजातौ साङ्कर्यं न दोषायेति न समाहितम् । अश्वतरे इति । तत्राश्वत्वगर्दभत्वयोः सङ्करः । ययोस्त्विति । पृथिवीत्वद्रव्यत्वयोः समावेशस्यादूषणत्वादिति भावः ।

स्पन्दसमवायिकारणतावच्छेदकतया मूर्तत्वं जातिः, तत्साङ्कर्याद्भूतत्वं न जातिः, भूतत्वस्योपाधित्वात्तत्साङ्कर्यं तु मूर्तत्वस्य जातित्वे न बाधकमिति तार्किकमतं निराकरोति–उपाध्योरपीति । इदं च प्राचीनखण्डनम् । दीधितिमते तु जन्यद्रव्यसमवायिकारणतावच्छेदकतया पृथिव्यादिचतुष्टयवृत्तिरेव भूतत्वं जातिः । आकाशे भूतपदव्यवहारस्तु बहिरिन्द्रियग्राह्यविशेषगुणवत्त्वप्रयुक्तो भाक्तः । मानाभावादिति । स्वसामानाधिकरण्य स्वाभावसमानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावप्रतियोगितावच्छेदकत्वाभावनियमस्य भङ्गप्रसङ्ग इति तदुक्तिस्तु निर्युक्तिकेति भावः । शरीरत्वे चेति । केवलपृथिवीत्वं घटादौ, केवलशरीरत्वं तैजसादिशरीरे, अस्मदादिशरीरे चोभयमि-

न्यायमतखण्डने । तथा च साङ्कर्यस्य जातिबाधकत्वमप्येतदेव यत्तद्धैधर्म्यकृतभेदभङ्गप्रसञ्जकत्वरूपमिति फलितम् । तदाह—न त्विति । मानेति । उक्त एवाशयः । एवञ्चेति मानाभावेन तस्य सर्वथा तदभावाकल्पकत्वे चेत्यर्थः । तस्यैव तद्बीजत्वेन तत्सांकर्यस्यैव दूषकत्वेन प्रागुक्तदृष्टान्तदार्ष्टान्तिकस्थले दोषाभाववत् परस्पर सामानाधिकरण्येनापि सिद्धिस्थले दोषाभावेन कत्वसाधुत्वादेरिव भूतत्वादेरपि जातित्वसंभवादिति भावः । आदिना कार्यतावच्छेदकपरिग्रहः परस्वीकृतवैषम्यं परिहरति—न हीति । मीमांसकमते अप्यसति बाधके समनियतधर्मान्तराभावे च लाघवाच्छक्यतावच्छेदकतयैव जातिसिद्धिस्सुवचा । किञ्च भौतिकसृष्टिकारणतावच्छेदकतया भूतत्वजातिसिद्धिः । एवं गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजातिवद्भोगकारणतावच्छेदकतया शरीरत्वजातिसिद्धिस्तदाह—दिगिति ॥

देशभाषानुसारेण कृतानां 'कुञ्ची' 'मञ्ची' 'आप्पि'-कोण्डा' इत्यादिनाम्नामसाधुत्वमेव । 'टि''घु' 'भ'आदि संज्ञानां तु शिष्टप्रयुक्तत्वात्साधुत्वमेव । सर्वशब्दानां सर्वार्थवाचकत्वेऽपि "वृद्धिरादैच्" ( अष्टा० सू० १-१-१ ) इत्यादीनामज्ञातशक्तिज्ञापकसङ्केतरूपतया विधित्वमेव । यत्तु—

व्यवहाराय नियमः संज्ञायाः संज्ञिनि क्वचित् ।
नित्य एव तु सम्बन्धो डित्थादिषु, गवादिवत् ॥
वृध्यादीनां च शास्त्रेऽस्मिन् शक्त्यवच्छेदलक्षणः ।
अकृत्रिमोऽभिसम्बन्धो विशेषणविशेष्यवत् ॥ इति ।

तत् तत्र सङ्केते कृते तत्तत्सङ्केतज्ञानरूपप्रकरणवशात्तस्यैवोपस्थितिर्नान्यस्येति फलितनियमपरम् ।

तदेतद्विशेषणविशेष्यवदित्यनेन सूचितम् । यथा 'नीलो घटः' इत्यनेन विद्यमाने एव घटे नीलसम्बन्धः

पुरुषेण बोध्यते, न तु तेन नीलादियोगः क्रियते, नील एव न पीत इति नियमश्च फलति तद्वदित्यर्थात्। पाणिन्युपदेशादिरूपसङ्केतग्राह्यत्वात्तत्संज्ञात्वस्य संज्ञानामनित्यत्वव्यवहारोऽपि। वाचकताबोधकत्वेऽपि तदनुत्पादकत्वान्न शब्दार्थसम्बन्धनित्यताहानिः। तेष्वेव वृद्धिपदवाच्यत्वोपदेशे वक्त्रिच्छाया एव नियामकत्वात् यदृच्छाशब्दत्वव्यवहारः, स्वेच्छया संज्ञाः क्रियन्त, इति च व्यवहारः। वेदमात्रप्रसिद्धशब्दभिन्नत्वरूपलौकिकत्वादुक्तरीत्या साधुत्वाच्च तेषां शास्त्रविषयता। स्पष्टश्चेदं सर्वं ऋलृक्सूत्रे भाष्ये। किञ्च सर्वेषां सर्वार्थवाचकत्वमस्माभिर्दुर्ज्ञेयं विशिष्य सकलार्थशब्दज्ञानाभावात्। सामान्यज्ञानं तु न बाधोपयोगि। योगिदृष्ट्या तु तथा व्यवहारः शास्त्रे। इत्यन्यत्र विस्तरः। देशभाषानुसारेण क्रियमाणनाम्नः सूक्तवाकादौ सङ्कल्पादौ चोल्लेखस्तु बर्बराणां भ्रान्त्यैव। तस्माद् "घोषवदाद्यन्तरन्तस्थं द्व्यक्षरं चतुरक्षरं वा नाम कर्तव्यं कृतं कुर्यान्न तद्धितम्" इति गृह्यसूत्रोक्तनाम्नैव साधुना तदुचितम्।

( कुञ्जिकाटीका )

असाधुत्वमेवेति। शास्त्रव्यवहारमार्गेणैव नामकरणात्। ननु "सर्वे सर्वार्थवाचका" इति मते वृद्धिरादैजित्यादीनां नियामकतया विधित्वाभावादाधुनिकसंज्ञात्वासङ्गतिरत आह—सर्वार्थवाचकत्वेऽपीति। अयम्भावः शब्दार्थसम्बन्धो योग्यतालक्षणोऽभिप्रेतः। सर्वो हि शब्दः संज्ञात्वेन विनियुज्यमानो योग्यत्वात्सर्वत्रार्थे सम्बद्धः। शक्त्यवच्छेदमात्रे तु संज्ञाकर्तुर्व्यापारः शब्दार्थसम्बन्धस्य नित्यत्वात्। एवञ्च शक्त्यवच्छेदान्नियमत्वमज्ञातशक्तिप्रकाशकत्वाच्च विधित्वमपीति। व्यवहारायेति। क्वचित्संज्ञिनि संज्ञाया

नियमो व्यवहारायेत्यर्थः । डित्थाद्यर्थे डित्थादिपदसम्बन्धो नित्य एव, गवादौ गोशब्दादीनामिवेत्यर्थः। तदिति। नियमपरमित्यत्रान्वयः।

वक्त्रिच्छाया इति । नन्वेवं शब्दार्थसम्बन्धस्यानित्यत्वापत्तिरिति चेन्न । वक्त्रिच्छया शक्तिप्रकाशनमित्यर्थात् । ऐजादिपदे कुत्वाद्यापादनं सङ्गमयति वृद्धिरादैजित्यादिना। लोकप्रयुक्तत्वरूपलौकिकत्वाभावादाह—वेदमात्रेति । लौकिकत्वादिति । लौकिकप्रयोगे शास्त्रप्रवृत्तेरावश्यकत्वादिति भावः । सूक्तवाकेति । "अमुकशर्मा" "आयुराशास्ते" इत्यादिसूक्तवाकप्रयोगो यागेषु। सङ्कल्पश्च यद्यपि मानसो व्यापारस्तथापि शब्दप्रयोग एव तथैव विधानात्। अन्तरन्तस्थमिति । अन्तः मध्ये अन्तस्था यरलवा यस्य॥

(कलाटीका)

यत्तु स्वेच्छयेति पक्षे टिघुभाद्याधुनिकसंज्ञावत् अप्पिकोण्डेत्यादीनामपि साध्वसाधुबहिर्भावः न चासाधुबहिर्भावः कथं ? तदर्थे ऽनादिप्रयुक्तत्वे सति शक्तिवैकल्यादिनान्यथोच्चारणविषयत्वस्यैवासाधुपदार्थत्वात्। किञ्च तदर्थे यस्य कस्यापि साधुत्वेन शास्त्रे ऽन्वाख्याने हि सामान्यस्यासाधुत्वं बोधयेत्, न च तथा प्रकृते ऽस्ति । एवं यो यत्रार्थे ऽनादिप्रयुक्तः सन् व्याकरणबोध्यः स तत्रार्थे साधुरिति तत्त्वं बोध्यम। अत एव सकलदेशशिष्टा यज्ञादिषु तत्तदाधुनिकसाङ्केतिकनामग्रहणे प्रत्यवायं न मन्यन्ते । अन्यथा साधूनेव प्रयुञ्जीत नासाधूनित्यादिनिषेधसद्भावात्तदापत्तिर्दुर्वारेति प्राञ्चस्तन्नेत्याह--देशेत्यादि ।

ननूक्तजातिविशेषस्याश्रयस्याऽव्याकरणसंस्कृतत्वेनाप्प्यादाविव टिघुभादावर्थाभाव इति तेषामप्यसाधुतापत्तिरत आह–टिघुभेति। धर्मबुद्ध्येति भावः । तथाच मुख्यमिदमेव तदनुमापकमिति तत्र व्याकरणपदमुपलक्षणम्। तेन व्याकरणसंस्कारकल्पनाद्यथाश्रुतमेव वेति तत्र तत्त्वमेवेति ततो वैलक्षण्येनात्र न प्रत्यवायो यज्ञादौ तत्र त्वस्त्येवेति भावः। यत्तु उक्तसाधुत्वमाधुनिकसंज्ञासु नाव्याप्तं सर्वे सर्वेति पक्षे व्यवहारायेति नियमबोधनेन तासामप्यनादित्वेनादोषादिति प्राञ्चस्तन्नेत्याह--सर्वेति । वाचकत्वस्य गृहीतस्यैव बोधजनकतया तद्ग्रहस्य व्यवहारतः सङ्केतेन वा जायमानत्वाद्विधित्वसम्भवे नियमासंभव इति भावः।

नन्वेवं हरिविरोधो ऽत आह–यत्त्विति । अत्र केचित् कचित्संज्ञिनि संज्ञानां नियमो व्यवहारायेत्यन्वयः । नियतव्यवहारायेति तदर्थः । ननु विधिरेव किं न स्यादत आह–नित्यएवेति । डित्थादिष्वर्थेषु डित्थादिपदानां नित्य एव सम्बन्धो गवादिपदानां गवाद्यर्थेष्विवेत्यर्थः । सर्वेतिपक्षेणेदम् । सामान्येनोक्तमेवार्थं विशिष्याह–वृद्ध्यादीति । अस्मिन् व्याकरणे। वृद्ध्यादीनां शब्दानां शक्तिसङ्कोचलक्षणो नियमो व्यवहारायेत्यन्वयः । अवच्छेदः । सङ्कोचः । इष्टान्यार्थनिरासाय च नियमः । तत्र हेतुरकृत्रिम इति । यत इत्यादिः । कृत्रिमत्वमाधुनिकत्वम् । यथा गुणद्रव्ययोर्गुणे विशेषणत्वं द्रव्ये विशेष्यत्वम्, अकृत्रिममनादिसिद्धमेव; न त्वाधुनिकं, तद्वत्संज्ञासंज्ञिसम्बन्धो ऽकृत्रिम एवेत्यर्थ इत्याहुः ।

यत्तु इदं गोत्रसंज्ञाविषयमिति तन्न । सङ्कोचे मानाभावात् । वृद्ध्यादीनामिति विरोधाच्च । यद्यपि नियमः सङ्केतग्रह इत्यर्थ इति तदपि न, उक्तोत्तरत्वात् । तदेतत् ध्वनयन्नन्यथा आह–तत्त्रेति । तत् हर्युक्तं । तत्र सर्वत्र । तत्र तत्रेति यावत् । क्वचित्तथा पाठ एव । अत एवाह–तत्तदिति । ज्ञानेति । उभयाकाङ्क्षासहकृतेत्यर्थः । तस्यैव । तस्य तस्यैव परमिति । ननु मच्छास्त्रे वृद्धिशब्देनादैच एव ग्राह्या इति शब्दनियमपरम् । तथा सति विनिगमनाविरहादादैचो वृद्धिशब्देनैव ग्राह्या इति नियमस्याप्यापत्तावाकारादीनां स्वशब्दादिभिर्व्यवहारानापत्तेश्च । तदस्मिन् वृद्ध्यायेत्यादावनिष्टोत्पत्तेश्च । अत्र पक्षे इत्थमर्थः । नियमः शक्तिबोधनं । शक्तिस्तु नित्येत्याह––नित्य इति । एवञ्च वृद्धिशब्दस्याप्यनेकेष्वर्थेषु शक्तिरस्त्येव तद्बोधनफलकं शास्त्रं अज्ञातशक्तिबोधकत्वात् । अपत्यं गोत्रेति सूत्रस्थकैयटोक्तनियमानुपपत्तेस्तदाह––वृद्ध्यादीनां चेति । अवच्छेदो निश्चयः । शब्दार्थस्यानवच्छेदे इत्यादौ तस्य तदर्थकत्वस्य दर्शनादिति, तदेतद्धृदिनिधायाह–तदेतदिति । विद्यमानत्वं संबन्धविशेषणम् । अत एवाह––नत्विति । तेन—उक्तवाक्येन । वाक्यान्तराशयेनाह––नीलादीति । सामर्थ्यादाह––नील एवेति । एवञ्चेदमेव हरिसंमतं, न तत् । परिसंख्यायां चात्र शास्त्रे प्रायेण नियमव्यवहारः । अत्र मते तदस्मिन्नित्यादौ न दोषः । तादृशज्ञानसत्त्वे ऽप्युभयाकाङ्क्षाया अभावात् । तत्र साहचर्येण लौकिकार्थावगतेरिति बोध्यम् ।

नन्वेवं न हि संज्ञा नित्येति तद्धितार्थोत्तरेति सूत्रभाष्यविरोधा- पत्तिरत आह–पाणिन्युपेति । आदिना वार्तिककारीयादिपरिग्रहः । संज्ञाभूततत्पदवाच्यत्वज्ञानस्यैतच्छास्त्रज्ञानात्प्रागभावेनानित्यत्वमि- ति तद्भावः । अन्यथा वैयाकरणानां शब्दस्य नित्यतया संज्ञायाश्च शब्दस्वरूपतया यथाश्रुतभाष्यासङ्गतिः स्पष्टैव । घटादौ घटादि- पदवाच्यत्वज्ञानं तु प्रवाहनित्यम्, इदं तु नेति विशेषः । नन्वेवं 'सिद्धे शब्दार्थसम्बन्धे' इति वार्तिकादिविरोधोऽत आह–वाचकतेति । नन्वेवं ऋलृक्सूत्रभाष्यादौ यदृच्छाशब्दत्वव्यवहारासङ्गतिरत आह– तेष्वेवेति । आदेश्वेवेत्यर्थः । एवेनान्यव्यवच्छेदः । इदमुपलक्षणं वृद्धिपदेनाऽऽदैच्वाचकत्वस्यापि । हरिव्यवहारोऽप्येतावतैवेत्याह– स्वेच्छयेति । नन्वेवमप्यलौकिकत्वात्कथं शास्त्रविषयताऽत आह– वेदेति । कर्णेभिर्देवास इत्यादावित्यर्थः । इदं चान्यत्रावश्यकम् । एतेन तत्सम्बन्धस्यानादित्वेन तासामपि लौकिकत्वमित्यपास्तम् ।

नन्वेवमप्यसाधुत्वात्कथं सा अन्यथा 'साध्वनुशासने' इति भाष्यविरोधापत्तेरत आह–उक्तेति । शिष्टाप्रयुक्तत्वेनेत्यर्थः । उक्तेऽर्थे भाष्यसंमतिमप्याह । स्पष्टश्चेदमिति । सर्वे टिध्वादीनां तत्त्वेन तत्वा- त्तत्वं। कूच्यादीनामसाधुत्वमशास्त्रविषयत्वं च । तेषां यदृच्छाशब्द- त्वेन व्यवहरणं च। तद्भाष्यमनुपदमेव स्फुटीभविष्यति । इदञ्चा- भ्युपेत्योक्तम् । वस्तुतस्तदेव नेत्याह–किञ्चेति । ननु तथाज्ञानाभावे ऽपि सामान्यज्ञानमस्त्येवात आह–सामान्येति । अतिप्रसक्तत्वादि- ति भावः । ननु तर्हि किं स व्यवहार एव न, अत आह—योगीति । शास्त्रेऽत्र पातञ्जले च। एतदुपपत्तिरुद्द्योतादावित्याह–इत्यन्यत्रेति । प्रसङ्गादाह–देशेति । एवञ्चेत्यादिः । वाचकत्वस्य सत्त्वेन साधुत्व- भ्रान्त्यैवेत्यर्थः । तर्हि कथं कार्यमत उपसंहरन्नाह–तस्मादिति । तेषामसाधुत्वादित्यर्थः । घोषवदादिर्यस्य तत् । घोषशब्दो धर्मपरः । अन्तः–मध्येऽन्तःस्थाः यण् यस्य । अन्तःस्थाशब्द आकारान्तः । कृतं, तदन्तमेव । अत एवाह–नेति । तद्धितम् । तदन्तम् ॥

किञ्च अग्न्यादिनक्षत्रदेवता उक्ता

नक्षत्रदेवता एता एताभिर्यज्ञकर्मणि ।

यजमानस्य शास्त्रज्ञैर्नाम नक्षत्रजं स्मृतम् ॥

इति वेदाङ्गज्यौतिषोक्तं नक्षत्रनाम च तदुपयोगि

'नामकरणे नाक्षत्रनाम नक्षत्रपादाक्षरादि कार्यम्' इति वृद्धाः। गृह्यपरिशिष्टे च क्वचित्तथैवोक्तम्। एतदेव जातकर्मप्रकरणे "नक्षत्रनाम च निर्दिशति, तद्रहस्यं भवति" इत्यापस्तम्बेनोक्तम्। "तदेव चाभिवादनीयं च समीक्षेत, तन्मातापितरौ विद्यातामोपनयनात्" इत्याश्वलायनेनोक्तम्। एवमेव नामकरणे वृद्धशिष्टानामाचारश्च। अत एव ज्यौतिषे यज्ञकर्मणीत्युक्तम्।

तत्तन्नक्षत्रवाचकेभ्यो जातार्थप्रत्यये निष्पन्नं नक्षत्रनामेति केचित्। तत्र "पुत्रस्य नाम गृह्णाति रौहिणाय तिष्याय" इति बौधायनसूत्रं मूलम्। यत्तु "असावसावित्यादिश्ये नामनी" इत्याश्वलायनेनोक्तं, तत्तु सन्दिग्धम्। यद्यपि देवत्रातेन 'आनुराधो देवदत्तः' इति प्रयोक्तव्यमित्युक्तं, तत्र सूत्राक्षरानुग्रहश्चिन्त्यः। शाङ्खायनादयश्च ज्योतिषोक्तमेवाद्रियन्ते। इदानीमाश्वलायना देवत्रातोक्त्या—

निर्दिशेद्यजमानस्य नाम सांव्यवहारिकम्।
नाक्षत्रं च यथा कृष्णशर्मा रौहिण इत्यपि॥

इत्याश्वलायनश्रौतकारिकोक्त्या च तथैवाचरन्ति इति नामकरणेऽपि तदेव नाक्षत्रं नामेति च वदन्ति।

परेतु बौधायनादिवाक्ये रौहिणादिपदं तत्तन्नक्षत्रजातत्वेन तत्तद्देवतानामोपलक्षणम्। एवं हि ज्यौतिषेण तेषामेकमूलकल्पनाल्लाघवं भवति, विकल्पस्यानौचित्याच्च, सञ्ज्ञापर्यायनामशब्देन पाचकादिशब्दवत् केवलयौगिकश्रावणादिशब्दानां ग्रहीतुमनौचित्याच्च। अभिवादनं प्रयोजनमस्येत्यर्थकाभिवादनीयशब्देन तस्य वक्तुमशक्यत्वाच्च, तस्य सा-

धारणत्वादित्याहुः ।

( कुञ्चिकाटीका )

अग्न्यादीति । अग्न्यादयो नक्षत्राणां देवताः । एताभिरिति । अग्निदत्तेत्यादिवत् । ज्यौतिषोक्तमिति । अश्विन्यादिचरणाक्षरेण कृतं चूडामणिरित्यादिकं च नाम यज्ञकर्मोपयोगीत्यर्थः । तथैवोक्तमिति । नाक्षत्रं नाम इदमेवोक्तमित्यर्थः । प्रकरणे इति । उक्तमित्यत्रान्वयः । नाम चेति । चकारेण नामान्तरसमुच्चयः । निर्दिशति । लिखति । रहस्यमिति । अप्रकाश्यत्वात् । तदेव चेति । आश्वलायनेनाभिवादनीयं चेत्यादिना तदेवोक्तमित्यन्वयः । व्यावहारिकं नाम कृत्वा अभिवादनीयमभिवादनप्रयोजनं नाम उपांशु कर्त्तव्यं तच्च मौञ्जीबन्धनान्तं मातापितरावेव जानीयातामुपनयनकाले चानेन नाम्नाऽभिवादयेति कुमारं प्रति वाच्यम् । नाम गृह्णातीति श्रौते कर्मणि अयं यजमानोऽमुकशर्मणे पुत्रायाऽऽयुराशास्ते इत्यादिप्रयोगात् । स च दर्शपूर्णमासयोर्वेदिमध्ये यजमान उपविश्य पुत्राणां नाम गृह्णाति अमुकशर्मा सन्तनोतु इत्यादि प्रयुज्यते । यस्त्वसाविति । अयं यजमान इत्यस्यानन्तरं नामद्वयमुच्चार्य आयुराशास्ते इति होता ब्रूयादित्यर्थः । असावसाविति । इदं नामद्वयप्रदर्शनम् । संदिग्धमिति । कीदृशं नामद्वयमित्यनिश्चयात् । देवत्रातेनेति । असौ देवदत्तः, असौ आनुराध इत्येवं नामद्वयं प्रयोक्तव्यमित्याश्वलायनवाक्यार्थ इति भावः। सूत्राक्षरेति । तत्सूत्रबलात्तादृशनामद्वयस्यालाभात् । आश्वलायना इति । देवत्रातोक्तकारिकोक्त्या चाचरन्तीत्यत्रान्वयः । सांव्यवहारिकम् । व्यवहारार्थसङ्केतितम् । अत्रायमाचारः स्वकुलदेवतानुसारेणामुकभक्त इति कांस्यपात्रे नाम लिखित्वा मासनाम कुर्यात् । तच्च ।

(१)कृष्णोऽनन्तोऽच्युतश्चैव वैकुण्ठोऽथ जनार्दनः ।
उपेन्द्रो यज्ञपुरुषो वासुदेवस्तथा हरिरिति ॥

अत्र चैत्रादिर्मार्गशीर्षादिर्वा क्रमः । ततो नक्षत्रनाम ततो द्व्यक्षरं चतुरक्षरं चेत्यादिशर्माद्यन्तं व्यावहारिकं नाम लेख्यमिति ॥

( कलाटीका )

पक्षान्तरं सूचयन्नाह—किञ्चेति । कृत्तिकादिक्रमेणेति भावः । अत्र एता वै इति एतासामिति वा वाच्ये एताभिरित्युक्त्या नाम्न-

(१) अत्राच्युतानन्तरं वैकुण्ठात्प्राक्चक्रधरः । अन्ते च योगीशः, पुण्डरीकाक्षः, इति मार्गादिक्रमेण द्वादश नामानि ।

स्तद्घटितत्वं सूचितम् । तत्त्वञ्च तत्प्रतिपादकशब्दघटितत्वम् । अत एव "कुलदेवतानक्षत्रसम्बद्धं पिता नाम कुर्या" दिति शङ्खोक्तिः । अन्यथा "मासनाम गुरोर्नाम दद्याद्बालस्य वै पिता" इति गार्ग्यवत् ब्रूयात् । तथाच तद् 'अग्निभक्तशर्मेत्यादि' 'अग्निदत्तशर्मा' इत्यादि वा बोध्यम् । या एता नक्षत्रदेवता उक्तास्ताभिरेताभिर्यन्नाम तद्यजमानस्य यज्ञकर्माणि नक्षत्रजं नक्षत्रात् तत्र तदुत्पत्तेर्जातं शास्त्रज्ञैः स्मृतमित्यर्थः । यज्ञेत्युक्त्या ऋत्विक्कर्तृकयजमाननामोल्लेखविषयताऽस्य सूचिता । यज्ञेत्यनेनान्यनिरासः । नक्षत्रमित्यनेनान्यस्य तत्त्वनिरासः । नक्षत्रसम्बन्धीदमेव नामेति भावः । तर्ह्यन्यत्र कथमत एतत्प्रसङ्गादाह-नामकरणे इति । नाक्षत्रं नक्षत्रसम्बन्धि । अत्र मानं सूचयन्नाह-गृह्येति । आश्वलायनेत्यादि । एवं प्रागपि शिष्टेति ।

एकवाक्यतार्थमाह—एतदेवेति । नक्षत्रपादाक्षरादावित्यर्थः । जातेति । "जातं वात्सप्रेणाभिमृश्योत्तरेण यजुषोपस्थ आधायोत्तराभ्यामभिमन्त्रणं मूर्द्धन्यवघ्राणं दक्षिणे कर्णे जाप" इत्यग्रे इत्यर्थः । वात्सप्रो दिवस्परीत्यनुवाकः । उत्तरेण तस्मिन्नहामिति यजुषा । "उत्तराभ्यामङ्गादङ्गादश्मा भवेति द्वाभ्याम्" । अनयोरेवाग्रे उभयत्र सम्बन्धः । जापो जपः । उक्तमन्त्रान्तोक्ताऽसावित्यव्यवहितं नक्षत्रनाम्नो जपः । सम्बुध्येति सूचयितुम् । अव्यवहितोक्तत्वसाधर्म्याजातकर्माव्यवहितकालिकनामकर्माह-नक्षत्रेति । चेनाग्रिमव्यावहारिकसमुच्चयः । निर्दिशतीति । वर्तमानसामीप्ये इति लट् । निर्देशो व्यवहितोच्चारणम् ।

नन्वेतस्यैवात्र निर्देशः कुतोऽत आह-तदिति । नक्षत्रनामेत्यर्थः । रहस्यम् । सर्वाज्ञेयम् । तथाच भाविसंज्ञयात्र निर्देशः । एतेन तस्याकृतत्वात्कथमत्र निर्देश इत्यपास्तम् । अनेन वक्ष्यमाणकालवदयमपि नाम कर्मकाल इत्युक्तं भवति । अत एवाश्वलायनेन कालान्तरं नोक्तम् । जातकर्मप्रकरणे एव तत्प्रयोगसमाप्त्युत्तरं 'नाम चास्मै दद्यु' रित्याद्युक्तं च । तच्च 'जातकर्मानन्तरमेव वा नाम चास्मै दद्यु' रिति गृह्यस्थचकारस्वरसेन जातकर्मसमानकालिकतालाभादिति भट्टोजिदीक्षितैर्व्याख्यातं च । वृत्तिकारो नारायणोऽप्येवम् । प्राग्वदाह-तदेव चेति । तदेकवाक्यतापन्नमुक्तमेव चेत्यर्थः । अभीति । "आहूतादिः सन् येन नाम्ना

ऽभिवादयते तत्तदभिवादनीयमसांव्यवहारिकं। तच्च समीक्षेत कुर्यात्। चेन पूर्वोक्तसांव्यवहारिकसमुच्चयः। तदभिवादनीयं मातापितरावेव विद्यातां आ उपनयनात्। तदारभ्य उपनीतस्य त्वाचक्षाते अनेन नाम्नाभिवादयस्व''इति भाष्यकृद्वृत्तिकारौ। आचारसंवादमप्यत्राह–एवमेवेति। आचारः। आचारो ऽपि। लेखश्चेति पाठे स लेखो ऽपि। तण्डुलोपरि लेखो ऽपीत्यर्थः। अत एव नामकरणे सर्वसम्मततया तस्यैव सत्त्वेनान्यस्याप्राप्तेरेव। मन्तान्तरमाह–तत्तदिति। प्रत्यये सति लुप्ते वा। दर्शपूर्णमासेष्टिप्रकरणस्थं तमाह–यस्वसाविति। अयं यजमानो ऽसावित्यत्रासावसाविति यजमाननामनी सांव्यवहारिकनाक्षत्रे च प्रथमान्तनादिश्यायुराशास्त इत्यादि होता ब्रूयादित्यर्थः। देवेति। तद्भाष्यकृतेत्यर्थः। तत्रान्याचारविरोधो ऽपि दोष इत्याह–शाखेति। अत एव चः तत्रैवेति भावः। एवेनोभयव्यवच्छेदः। तत्रैवाचारभेदमाह–इदानीमिति। चरन्ति तत्रैवेति भावः। एवञ्च मतभेदस्तत्र सिद्धः। अतो नामकरणे ऽपि मतभेदमाह–नामकरणे ऽपीति। चो व्युत्क्रमे। वदन्तिच नत्वाचरन्ति। एवञ्च न पूर्वविरोधः।

इमं विरोधं परिहरन्सिद्धान्तमाह–परे त्विति। आदिनोक्तकारिकादेवत्रातपरिग्रहः। देवनानामेति। तद्घटितनामेत्यर्थः। तेषाम्। बौधायनादीनाम्। ननु व्रीह्यादिवद्विकल्प एवास्त्वत आह–विकल्पेति। अष्टदोषदुष्टत्वादिति भावः। ननु तथापि अन्यत्रेवात्रापि स एवास्त्वत आह–संज्ञेति। तेषु वाक्येष्वित्यर्थः। ननु नेदं सर्वं नामकर्मप्रकरणस्थमिति असति बाधके नामशब्दो वाचकसुबन्तपर एवास्तु, किञ्च वृद्ध्यादेः संज्ञात्वस्य पाणिनेः कृतकादेस्संज्ञात्वस्य भगवत इष्टत्वेन 'कृतं कुर्यात्' इत्यादि तत्सूत्रे उक्तत्वेन च तेन तद्ग्रहणे बाधकाभावादत आह–अभीति। गहादित्वाच्छः 'प्रागुक्ताश्वलायनीये इत्यर्थः। अत्र हेतुमाह–तस्येति। श्रावणादेरित्यर्थः। अभिवादनकार्ये एव तस्य श्रावणत्वं नान्यकार्ये इत्यस्याभावादित्यर्थः। एवञ्च तत्र तथा सुवचत्वे ऽपि नामकरणे तथा दुर्वचमिति तेषां तथाचारस्तत्रायुक्त एवेति भावः॥

अत्र तत्त्वं महान्तो विदांकुर्वन्तु।

यत्तु कूचीत्यादीनां साध्वसाधुबहिर्भूतत्वं शास्त्रविष-

# काशीसंस्कृतसीरीज्-पुस्तकमाला ।

इयं काशी—संस्कृतग्रन्थमाला विभागशः प्रकाशिता भवति । एतस्यां प्राचीनाः नर्वानाश्च दुर्लभाः सुलभाश्च अत्युपयुक्ताः संस्कृतग्रन्थाः काशिकराजकीयसंस्कृतपाठशालीयैः पण्डितैरन्यैरपि विद्वद्भिः संशोधिताः क्रमेण संमुद्रिता भवन्ति । अस्यां प्रकाश्यमाणानां ग्रन्थानां मूल्यं सूचीपत्रे प्रकाशितं वर्तते । परंतु एतस्या नियमेनाऽविच्छिन्नतया निश्चितग्राहकमहाशयानां प्रतिमुद्राशतकं पञ्चविंशतिमुद्राः ( कमिशन ) परावर्तिता भवेयुः मार्गव्ययश्च न पृथक् दातव्यो भवेत् ।

तत्र मुद्रितग्रन्थनामानि मूल्यम् ।

१ नलपाकः नलविरचितः । संपूर्णः ( पाकशास्त्रम् १ ) रु० १—८
२ संक्षेपशारीरकम् । रामतीर्थस्वामिकृतान्वयार्थबोधिनीटीकासहितम् । ( वेदान्तं १ ) रु० ८—०
३ वैशेषिकदर्शनम् । पं० श्रीढुण्ढिराजशास्त्रिकृतविवरणोपेताभ्यां प्रशस्तपादभाष्योपस्काराभ्यां समन्वितम् (वैशेषिकं१)रु०२—८
४ श्रीसूक्तम् । विद्यारण्यपृथ्वीधरश्रीकण्ठाचार्यकृतभाष्यत्रयेण टिप्पण्या च समलङ्कृतम् । ( वैदिकं १ ) रु० ०—६
५ लघुशब्देन्दुशेखरः ( भैरवी ) चन्द्रकलाटीकासहितः तत्पुरुषादिसमाप्तिपर्यन्तः । ( व्याकरणं १ ) रु० ८—०
६ कारिकावली मुक्ता० दिन० राम० शब्दखण्डसहिता तथा "गुणनिरूपणदिनकरीय" महामहोपाध्याय पं० श्रीलक्ष्मणशास्त्रिकृतव्याख्यासहिता । ( न्यायं १ ) रु० ६—०
७ पञ्चकिरणम् । वार्तिकाभरणालङ्कृतवार्तिकटीकया-तत्त्वचन्द्रिकासमवेतविवरणेन च समन्वितम् । ( वेदान्तं २ )रु० ०—८
८ अलङ्कारप्रदीपः । पण्डितवरविश्वेश्वरपाण्डेयनिर्मितः । रु० ०—८
९ अनङ्गरङ्गः महाकविकल्याणमल्लविरचितः । (कामशास्त्रं१) रु० ०—१२
१० जातकपारिजातः । श्रीवैद्यनाथशर्मणा विरचितः । (ज्यो० १) रु० २—०
११ पारस्करगृह्यसूत्रम् । कात्यायनसूत्रीयश्राद्ध-शौच-स्नान-भोजन-कल्पसहितम् । ( कर्मकाण्डम् १) रु० ०—८
१२ पुरुषसूक्तम् । सायणभाष्य-महीधरभाष्य-मंगलभाष्य-निम्बार्कमतभाष्यचतुष्टयसहितम् । ( वैदिकं २ ) रु० १—४
१३ श्रीमत्सनत्सुजातीयम्—श्रीमच्छङ्करभगवत्पादविरचितभाष्येण नीलकण्ठीव्याख्यया च संवलितम् । ( वेदान्तं ३ ) रु० १—४
१४ कुमारसंभवं महाकाव्यम् । महाकवि-श्रीकालिदासवि० । सञ्जीवनी-शिशुहितैषिणी-टीकाद्वयोपेतम् सम्पूर्णम् । (काव्यं२) रु० १- ८

२९. कामसूत्रम् । श्रीवात्स्यायनमुनिप्रणीतं बहुयत्नरासादितया पूर्णया जयमङ्गलरचितया टीकया समेतम् । बहुखण्डितपाठान् परिपूर्य,सूत्राङ्कांश्च संयोज्य, परिष्कृत्य संशोधितम् । (काम०२) रु० ८—०

३० न्यायकुसुमाञ्जलीः । न्यायाचार्यपदाङ्कितश्रीमदुदयनाचार्यविरचितः । महामहोपाध्यायरुचिदत्तकृतमकरन्दोद्भासितमहामहोपाध्याय वर्द्धमानोपाध्यायप्रणीतप्रकाशसहितः (न्यायं४) रु० ६—०

३१ परिभाषेन्दुशेखरः । म० म० श्रीनागेशभट्टरचितः । म० म० भैरवमिश्रविरचितया भैरवीत्यपराख्यया परिभाषाविवृत्या–तत्त्वप्रकाशिकया टीकया च सहितः । (व्याकरणं ४) रु० ३—०

३२ अर्थसंग्रहः । पूर्वमीमांसासारसंग्रहरूपः । श्रीलौगाक्षिभास्करविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यश्रीरामेश्वरशिवयोगिभिक्षुविरचितमीमांसार्थकौमुद्याख्यव्याख्यासहितः । (मीमां०२) रु०१—०

३३ न्यायवार्त्तिकम् न्यायदर्शनवात्स्यायनभाष्योपबृंहणम् । परमर्षिभारद्वाजोद्द्योतकरविरचितम् । महर्षि–गोतमादिचरितसम्वलितबृहद्भूमिकासहितम् । (न्यायं वि० ५ ) रु० ६—०

३४ शुक्लयजुर्वेदसंहिता । वाजसनेयिमाध्यन्दिनशाखीया । श्रीमदुव्वटाचार्यविरचितमन्त्रभाष्येण श्रीमन्महीधराचार्यविरचितवेददीपेन च सहिता । ( भाग १–२–३–४ ) (वैदिकं ३) रु० ८—०

३५ शुक्लयजुर्वेदकाण्वसंहिता । श्रीसायणाचार्यविरचितभाष्यसहिता । १ अध्यायादारभ्य २० अध्यायपर्यन्ता । (वैदिकं ४) रु० ६—०

३६ सिद्धान्तलेशसंग्रहः । श्रीमदप्पयदीक्षितविरचितः । श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णानन्दतीर्थविरचितया कृष्णालङ्काराख्यया व्याख्यया समलंकृतः । (वेदान्तं ४) रु० ६—०

३७ काशिका । श्रीपाणिनिमुनिविरचितव्याकरणसूत्राणां वृत्तिः वि- ... द्वर–वामन–जयादित्यविनिर्मिता । (व्याकरणं ५) रु० ६—०

३८ प्राकृतप्रकाशः । भामहकृतः । श्रीमद्वररुचिप्रणीतप्राकृतसूत्रसहितः । टिप्पण्या च संयोजितः । (व्याकरणं ६) रु० १—४

३९ जीवन्मुक्तिविवेकः श्रीमद्विद्यारण्यस्वामिविरचितः । भाषानुवादसमेतः । (वेदान्तं ५) रु० २—०

४० श्रीनारदीयसंहिता । ब्रह्मणोपदिष्टो नारदमहामुनिप्रोक्तो ज्यौतिषग्रन्थः । (ज्योतिषं २) रु० ०—६

४१ मेदिनीकोशः–मेदिनीकारविरचितः । (कोशं १) रु० १—८

४२ मीमांसादर्शनम् । श्रीशबरस्वामिविरचितभाष्यसहितम् ( भाग१—२ ) (मीमांसा ३) रु० १०—०

४३ न्यायदर्शनम् । श्रीगोतममुनीप्रणीतम् । श्रीवात्स्यायनमुनीप्रणीतभाष्यसहितम् । श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यविरचितन्यायसूत्रवृत्त्यनुगतम् । टिप्पण्यादिसहितम् (न्यायं ६) रु० ३—०

४४ दाननयूखः । विद्वद्वरश्रीनीलकण्ठभट्टविरचितः । (धर्मशास्त्रं १) रु० १—८
४५ कालमाधवः । विद्वद्वरश्रीमाधवाचार्यविरचितः (धर्मशास्त्रं २) रु० १—८
४६ भास्वती । श्रीमच्छतानन्दविरचिता । श्रीमातृप्रसाद ( दैवज्ञभूषण) पाण्डेयेन कृताभ्यां छात्रबोधिनीनाम संस्कृतसोदाहरण भाषाटीकाभ्यां सहिता । (ज्योतिषं ३ रु० २—०
४७ फक्किकाप्रकाशः । उपाध्यायोपाह्ववैयाकरणकेसरीविरुदाङ्कितमैथिलेन्द्रदत्तशर्मविरचितः । पं० सीतारामशर्मकृतटिप्पण्या विभूषितः । (व्याकरणं ७) रु० १—४
४८ मिताक्षरा । श्रीगौडपादाचार्यकृतमाण्डूक्यकारिकाव्याख्या-श्रीमत्परमहंसपरिव्राजकाचार्यस्वयम्प्रकाशानन्दसरस्वतीस्वामिकृता । शंकरानन्दकृतमाण्डूक्योपनिषद्दीपिका च । (वेदा०६) रु० १—
४९ काव्यप्रकाशः । श्रीमम्मटाचार्यविरचितः । पं० श्रीहरिशङ्करशर्मणा मैथिलेन संगृहीतया नागेश्वरीटीकयाऽलङ्कृतः (काव्य०४) रु०४ —
५० अधिकरणकौमुदी । श्रीदेवनाथठक्कुरकृता । (मीमां० ४) रु० १—०
५१ रघुवंशमहाकाव्यम् । महाकविश्रीकालिदासविरचितम् महामहोपाध्याय श्रीमल्लिनाथकृतसञ्जीविनीटीकयोपेतम् पं० श्रीकनकलालठक्कुरेण विरचितया भावबोधिनी टिप्पण्या समलङ्कृतम् संपूर्णम् । रु० १—४
५२ काथबोधः । साजनीकृत टीकोपेतः । दत्तात्रेय सम्प्रदायाऽनुगतः । रु०—८
५३ रसचन्द्रिका । पर्वतीय-पण्डितप्रवर-श्रीविश्वेश्वरपाण्डेय निर्मिता (काव्य० ६) रु०१—०
५४ अलङ्कारमुक्तावली । पर्वतीय-विद्वद्वर-श्रीविश्वेश्वर पाण्डेय-निर्मिता— ( काव्य० वि० ७ ) रु० १२
५५ वृत्तरत्नाकरः-भट्टकेदारप्रणीतः । नारायणभट्टीयव्याख्यासहितः । सम्पादकनिर्मितविषमस्थलटिप्पणोपेतः । श्रुतबोधच्छन्दोमञ्जरीसुवृत्ततिलकैश्च समेतः । (छंद वि० १) १-८-०
५६ अलङ्कारशेखरः । केशवमिश्रकृतः । साहित्योपाध्याय वेतालोपाह्व श्री अनन्तरामशास्त्रिणा भूमिकादिभिः संभूष्य संशोधितः । ( अल० वि० १ ) १—४
५७ शक्तिवादः-टीकात्रयोपेतः । श्रीगदाधरभट्टाचार्यप्रणीतः । कृष्णभट्टकृतया मञ्जूषया-माधवभट्टाचार्यनिर्मितया विवृत्या श्रीमन्माध्वसंप्रदायाचार्य्यदार्शनिकसार्वभौमसाहित्यदर्शनाद्याचार्यतर्करत्नन्यायरत्न गोस्वामिदामोदरशास्त्रिरचितया विनोदिन्या च समेतः । ( न्या० वि० ७ ) २-०-०

पत्रादिप्रेषणस्थानम् —
जयकृष्णदास—हरिदासगुप्तः,
चौखम्बा संस्कृत सीरीज आफीस,
विद्याविलास प्रेस, गोपालमंदिर के उत्तर फाटक
बनारस सिटी ।